पिकरवे वरवे वरवेति सा-
हरिण लाञ्छनलाञ्छनलाञ्छना ॥१६॥
न सहते सहते सहते सखी
तव वियोग वियोगमयोगत् हृत् ।
सपदितां तरुणिं सरणिं मणिं
किरतु नामनवं नवनीविजम् ॥१७॥
अयतयाकलयाकलयाशुभां
वनजदामजदामजदीप्तिभिः ।
हरिरगात्तमगात्तमगाद्वसा
मुदमतीवमतीवदृशोः स्थितम् ॥१८॥
रामचन्द्रकविनाकविनादः
पुरुषोत्तमसुतेन सुतेन ।
राधिकात् हृदयशोकदमासी
द्राधिकात् हृदयशोकदमासीत् ॥१९॥

इति श्रीपुरुषोत्तमात्मजनार्दनस्तस्य
नन्दन रामचन्द्रकविकृतं
राधाविनोदाख्यं काव्यं समाप्तम् ।

# नलोदयः ।

## प्रथमोल्लासः ।

हृदय सदायादवतः पादाटव्या दुरासदायादवतः ।
अरिसमुदायादवतस्त्रिजगत्यागाःस्मरेणदायादवतः ॥
योजनिनागोपीतश्चचारयोवल्लवांङ्गनागोपीतः ।
सूर्यैनागोपीतः कंसाद्यो द्वेषसेव नागोपीतः ॥
यद्दारिषु सन्नामानस्थितयो यन्नुन्नमुदलसन्नामानः ।
यत्र ससन्नामानः सुर्भवभाजश्च पठितसन्नामानः ॥
समनिन्द्दानवनाशाञ्जनताखिलकुलंयथैवदानवनाशमम्
विरदाह्वानवनाशं चगच्चलभतेयतः सदानवनाशमम्
अस्ति सराजानीते रामाख्यो यो गतीपराजानीते ।
यस्य रराजानीते रत्नानि जनः कुले धराजानीते ॥
यः सेनानावारिप्रकरनदीः शरमयं धुनानावारि ।
अतरन्नानावारि व्यसनैर यद्भुवि वनञ्च नानावारि ॥
अपि यो दायादाय जयप्रदोंऽहसि सतां यदायादायः ।
करमादायादाय श्रियोब्धिरधिराजमसिगदायादायः
अविदूरराजादित्या कृतास्पमेदैवभूः सराजादित्या ।
येन सराजादित्या विदिवात्सं युक्तनुमराजादित्या ॥

खलसेनानावेद्यः खांहोब्धौ भुविच यस्य नानावेद्यः।
स्निग्धजनानावेद्य प्रयतेस्य सुकाव्यविरचनानावेद्यः ॥
अथ निजराज्यन्तेन प्राशासि नलेन प्रवरराज्यन्तेनः
येनाराज्यन्तेन श्रियादिशो यस्य विहतिराज्यन्तेन ॥
मूर्तिं मारसमानां योदधदायुः सहस्रमारसमानाम् ।
रुद्रकुमारसमानामजयद्द्विषताम्पंक्तिमारसमानाम् ॥
साश्वनियामानयतः श्रेष्ठाविद्यास्तदाश्रयामानयतः ।
अधिकायामानयतः प्रत्रावपियस्यधीर्दयामानतः ॥
अहितानामायस्य त्राता यःशरणगामिनामायस्य ।
गतनानामायस्य सुतः पिता वीरसेननामायस्य ॥
भुव्यतनोदन्तेन द्विषतां सयशांसि शोभनोदन्तेन ।
नीतानोदन्तेन क्षितिमभजन्नहितदन्तिनोदन्तेन ॥
सचिवगिरागोपायन्नलःस्पृथिवींनिरस्तरागोपायम्।
शत्रोरागोपायं नीत्वा नेमु र्महत्तरागोपायम् ॥
योऽदम्भीमान्यायादधिकोथारिपुर्यमेत्य भीमान्यायात् ।
वैदर्भीमान्यायात्त्रिजगति कन्या बभूव भीमान्यायात् ॥
महिततमारम्भाभिर् दमयन्तीसद्गुमारमारम्भाभिः।
दधती मारम्भाभिर् ववृधे सोरुद्वये समारम्भाभिः ॥
सारत्नंनारीणांनलःश्रियामजनिनिलयनंनारीणामम्
यस्यानन्नारीणां मुकमुवमापद्वटावनं नारीणामम् ।
चकमे साराजन्यश्रेष्ठन्तन्तां स तेजसाराजन्यः ।
आत्तविसाराजन्यश्रियोऽधितययाजिताःससाराजन्यः

नार्त्तिर् नोद्यानेन प्रभाविहीनेन शोभनोद्यानेन।
स्मरजानोद्यानेनस्फुटस्मितिगतिमिहनलोतनोद्यानेन
सोऽहितहन्तापततः कांश्चिदपश्यद्धितायहन्तापततः।
स स्नेहन्तापततस्तान्यदमी तोषमावहन्तापततः॥
तन्तरसारसमानः सविहंगगणोऽब्रवीत्ससारसमानः।
गतहिंसारसमानस्तद लब्धोनिष्क्रयः स्वसारसमानः॥
त्वंभूषकेलवङ्गत्वादधिको भैम्यास्तु मोऽत्तिकेलवङ्गत्वा।
सातेङ्केलवङ्गत्वासक्ता लल तत्सकाशकेलवङ्गत्वा॥
इतिहंसारामाया निकटंयासयन्नतेव सारामाया।
जग्मुःसारामाया जगदुश्चालीभिरभिससारामाया॥
श्रीसंकाशाशस्य त्वम्भैमिनलस्य शशिनिकाशास्य।
अरिलोकाशास्य यदि भार्यास्याः कुमारिकाशास्य॥
इतिहांसेनोदितया गणेन भैम्या मुदारसेनोदिनया।
नवभासेनोदितया स्मरेण सपुनर्नलोकसेनोदितया॥
तावज्जधावाजस्य श्रेयः पुनरस्य तन्निधावायस्य।
ताञ्चनिधावायस्य व्यनुयंस्तुलनाय न विबुधावायस्य॥।
इति सविनामानितया जहे भैम्यानलोऽपि नामानितय
वारस्यंग्नामानितयाभिध्येचविचिन्तरतस्यनामानितय
अथ ससमुप्रागस्य ल्मान्तस्यालंकृतेः सरद्रागस्य।
यौवनमुद्रागस्य स्वसुतारलस्य सादमुद्रागस्य॥
दृष्ट्वा राजातनुत स्वयंवरं विधिवदिन्दिराजातनुतः।
यस्य जराजातनुतः पृथग्व्यथानौजनाद्राजातनुतः॥

तं ह्यासेनापालिः स्वयंवरं क्षितिभुजां ससेनापालिः ।
न बभासेनापालिः स्वर्गेषु यैः शिरसि यारसेनापालि॥
तां गां सेनाराजिः स्वर्गसदां यैः सदारसेना राजि ।
आयासेनाराजिज्जयितरिपौ चलति विबुधसेनाराजि
सोथ परमहस्तेन प्रापि नलेनोत्सवः परमहस्तेनः ।
स्फुरितपरमहस्तेन प्रवभौरविणेवतत्पुरं परमहस्तेन॥
क्षितिपालसन्नालीकानहितेषु मुखेन्दुतुलितसन्नालीकान्।
राज्ञः सन्नालोकान् कान्तिर्विबुधांश्चनाहसन्नालीकान्॥
अजनिकलापास्यन्तंस्व ध घोऽनिजकंमहः कलापास्यन्तम्
खलुकलापास्यन्तम्प्रेच्य नलंसुरततिः कलापास्यन्तमम्॥
स्वर्निलयानामनलंकृतमपिजेतुन्ततिः श्रियानामनलम्।
यमजेयानामनलम्प्रोचे शक्रस्तमरिचयानामनलमम् ॥
वद कामायासन्नस्त्वमस्यै यद्गुणाः श्रमयासन्नः ।
श्रेष्ठतमायासन्नस्त्वान्द्रष्टा ननु जनः स्वमायासन्नः ॥
इति सरवेकेहास्तन्यस्य समुकुलं सुरप्रवेकेहास्त ।
तामविवेकेहास्तः श्रयति स्त्रीतव पार्थिवेकेहास्त ॥
हरिपवमानयमानान्दूतोऽस्मिनलोमहारमानयमानान्।
भवतींमानयमानानस्मैमिसुरान्विद्धिमहमिमानयमानान्
तुल्येश्वरसादेहिप्रभवो मग्नाः प्रसरसादेहि ।
तानभिसरसादेहि स्वजञ्चनाकात्सुखञ्चसरसादेहि॥
इति कृतसामारवतः सुरलोकात्तन्मुखेन सामारवतः।
नरिरंसामारवत स्थलादिव नलोत्कमानसामारवतः॥

साविरराजायतयावीक्ष्य दृष्ट्वा तं स्मरातुराजायतया।
स्थितिरवाजायतयाद्युसदाञ्चाभाषिनिषधराजायतया
तस्या देवाद्यस्य प्रणम्य च ललेन धीः पदेवाद्यस्य ।
सति निनदेवाद्यस्य स्वयं प्रियाया पदं मुदेवाद्यस्य ॥
अथ तरसारङ्गेयन्नृपतिगणोऽस्थित पदेषु सारङ्गेयम् ।
चञ्चलसारङ्गेयन्दमयन्ती चाचितुलितसारङ्गेयम् ॥
व्यधुरवनामान्येषु प्रजा नृपेष्वथ निवेद्य नामान्येषु ।
स्वैर्नामान्येषु प्रकीर्त्यमान्येषु शोभनामान्येषु ॥
साङ्गेननलसमानाननलसमानानमुतकतिचित्पुरुषान्
प्रैक्षत ननलसमानाननलसमानानभून्न तेषाम्भेदः ॥
रुचिकृतनासत्यागाःस्फुरत्नुलोयदि चवर्ज्मनासत्यागा
अपि दीनासत्यागान्यायगुते नैव वर्त्मनासत्यागा ॥
यदि वाभावन्यस्य स्थितास्मि नलएव नरविभावन्यस्य।
देवसभावन्यस्य द्विपस्य वपुषो भवेद्विभावन्यस्य ॥
क्वाभावासावनितानितिभुवमैक्षत्सुरान्सुवासावनित
स्वपतिं वासावनिताचिह्नं धार्मिकजने ध्रुवासावनिता।
स्वरिरंसादेवाल्याकुलया दृष्ट्यार्थितापि सादेवाल्या ॥
वपुषि ससादेवाल्या दृष्टनलमुपस्थितं रसादेवाल्या॥
सत्सदसोमाननया रुद्रसमेयः स्वतेजसोमाननया ।
प्रष्टतः सोमाननया नलवभौ भुविगुणेन सोमाननया॥
मदरम्भावरमस्यज्ज्ञात्वायमनोगुरुप्रभावरमस्य ।
सुरदृषभावरमस्य प्रदिश्य जग्मुतर्गतप्रभावरमस्य ॥

गुरुमहिमापरमायास्लम्भी नलएषसतिमापरमायाः।
प्रियया मापरमायाः स्वपुरमगुर्यत्र तं चमापरमायाः॥
शशिना समहासमहा नगरे जनतासमहास्तमुदम्।
अतिभासुरयासुरयाव्यहरद्यतनोत्सुरयासुरयागम॥
इति श्रीकालिदासकृते नलोदये सत्काव्ये
प्रथमोल्लासः।

द्वितीयोल्लासः।

अथ रतिरेकान्तेन प्रापि नलेनावमन्दिरेकान्तेन।
ताम्पुनरेकान्तेन प्राप्तवता रिपुमदातिरेकान्तेन॥
बभौ ससारसागरश्चकाससारसार्द्रधीः।
मधुः ससारसारवस्तदा ससारसार्णवः॥
समुदधिताशालीनां करेण कणिशाग्ररुचिजिता-
शालीनाम्। दिनभर्त्ताशालीना मिवनलिनीमथ-
समुत्थिताशालीनाम्॥
कुरवापचसारसकाकुरवान् कुरवाव्यनगोपितदा-
कुरवान्। कमलंकृतवकृतपङ्कमलं कमलं नविलोम-
यितुङ्कमलम्॥
अगुरतिमहिमानीतस्ततोरविमहांसि गुरुतमहिमा
नीतः। भवनं महिमानीतःस्मरेण परितःशरा-
व्यमहिमानीतः॥
स्मरहृचितयाजगतः श्रितिसूचितयाभवद्धि चम्पकमु-

कुलम् । तदसूचितयाव्यथया निरसूचितयाययाविः
युगदम्पतिकौ ॥

विरलोद्गपलाशस्य प्रचुरम्पुष्पं बभूव चपलाशस्य ।
स्मरनोचपलाशस्य प्राप्याध्वगपिशितचारुचपलाशस्य

द्रूहललनाशोकालि प्रदेन येनात्ममदविनाशोकालि ।
कामेनाशोकालि स्वनहुंकृतिभिः सदिचुनाशोकालि॥

स्मरस्य युद्धरङ्गता रसा रसा रसा रसा ।
जिता वियोगिनः समुन्नते नते नते नते ॥

नुन्नमनामधुनानाश्रयतिम्हतिक्कोविनाङ्गनामधुनाना।
द्रूतिललनामधुनानाविभमधयतिकलतदर्थनामधुनाना॥:

पिको पिको पिको पिको वियोगिनीरभर्त्सयत् ।
वचांसि भङ्गमालपन्निता निता निता निताः ॥

श्रीरापिकलापेन प्रहृष्टद्रुमाम्नावलिषु पिकलापेन ।
नकलापिकलापेन प्रणर्त्तनमकारिवागपिकलापेन ॥

सहकारहृते समपेसहकारहणस्यके न सस्मारपदम्
सहकारसुपरिकान्तैःसहकारमणीपुरःसकलवर्णमपि

अधिगदकामधुरागा दृगमेत्य भ्रमरपटलिकामधु-
रागात् । पीत्वोत्कामधुरागाद्द्रुतमकृततः स्रियो-
धिकामधुरागात् ॥

नसमानसमानसमानसमागममापसमीच्यवसन्तनभ
भ्रमदभ्रमदभ्रमदभ्रमदभ्रमरच्छलतःखलुकामिजनः
गतमन्वचयेनगृहा दसमुत्तरतान्तरतान्तरतान्ततामः

परएव विकारइयायद्दृहत्तमसन्तमसन्तमसन्तमसन् ॥
क्रुधिकान्तवधान्तवदामसमापनयापनयापनयापनया ।
तव्रतेऽनुशयेनचतामश्मनैरवतारवतारवतारवता ॥
नभसोविवरं कुसुमेत्तणभागतरोगतरो गतरोगतरो
वदकान्तमवेच्य्ययथाद्यमधावरमेवरमेवरमेवरमे ॥
श्रितेतिगामनागतस्वबन्धुकामनागतः ।
परापनामनागतस्तताभकामनागतः ॥
काललनादिवसन्तं कुसुमशरमसोढद्युनादिवसन्तम्
अलिभिरनादिवसन्तं दृष्ट्वायनात्मनोऽर्थनादिवसन्तम्॥
स्वयमथ मन्दारितया युक्तोयुक्तन्नलः स मन्दारितया।
आरामन्दारितया मदनेन धियापदुत्तमन्दारितया ॥
अनुव्रता समाननं समानन्द भीमजा ।
तमिन्दुना समाननं समानन्दने वने ॥
इह रुचिरामावलयस्वदृशमितिपृथक्प्रियस्वरामा-
वलयः । प्राग्रामाबलयस्फुरो गिरा यदुदरेभि-
रामाबलयः ॥
नवकुसुमानमनागागन्तुं नैच्छत्परासमान मनागाः ।
अर्जनिपुणानमनागाश्रित्यससत्कुसुमदानमानमनागाः
रुपितं सखिसादमसुष्यलसत्तनुते तनुतेतनुतेतनुते।
ननवाननवाननवाननवागिहतेचरणेच्छतिमेष्यतिसः ॥
अपि चैत्यनगानवता नवता नवता नवतास्तरा

मधुना । इह सौख्यमगोचरमा चरमाचरमा-
चरमाश्रनरम्यतरा ॥
इतिलालिकयालिकयातकचैरतिकयालिकयालिक-
याकर्थिता । दयितं समयासमयाद्दपराव्यहरत्ससया
समयाचतया ॥
अतिरुचिमानस्तवकः सरस्तटो यंविचीयमानस्तवकः ।
इहखलुमानस्तवकः प्रियामितिपरोनयत्स्वमानस्तवकः
अरुणतरपरागस्य प्रसवमस्रै क्षिष्ट न पुनरपरागस्य ।
हसितैरपरागस्य स्वैस्तिष्ठन्त्यपि लवेषुसुरपरागस्य ॥
अवेक्ष्य पल्लवालयानगान् स्थितालवालया ।
लतातयेवबालयावभेऽन्यया ववालया ॥
व्रततीनामालीनां मध्येन्योव्यचिनुताङ्गनामालीनाम् ।
अप्येनामालीनांस्थिताश्वजानन् मदाश्वनामालीनाम् ॥
कश्चित्तुःकलुषाक्षिसुखार्थंनभागपरागपरागपरागपरया
स्थितिमापतथवहृतः सपुमाननयाननयाननयाननया
स्वमनेनसमायतया व्यधितागःस्वेवकस्मनसमायतया ॥
स्टनुमानसमायतया तस्मैनाक्रोधिजीवनसमायतया ॥
अभवदनेनानाविस्मयदोन्योमानिनीजनेनानावि ।
अतिसुजनेनानाविस्खलनं यदुपवनमनेनानावि ॥
जनादसौः समानतः पदाहृतिं समानतः ।
परोदधौसमानतः स्वमूर्ध्निभासमानतः ॥
तनुच्छटोत्तमालया तया भुवोत्तमालया ।

अहरि गीतमालया निलावधूतमालया ॥
श्रितलसद्दारामाभिः प्राप्येति जनोविहृतिमुदा-
रामाभिः । आरादाराभि स्फुरितसरोजं सर-
स्तदारामाभिः ॥
किमपः सरसीमायाधाम गुणान्वितप्रसरसीमायाः ।
द्रुतमिति सरसीमायात्यक्तोमैष्यानलस्य सरसीमायात्॥
गतपङ्काः सारस्य श्रियोऽस्य जहुर्मनोधिकाःसारस्यः ।
अपिकोकाःसारस्यास्थिताः कुरर्य्यश्च हंसिकाःसारस्यः
कान्तितरस्तिमिताभिः स्फुटमङ्गि र्विहृतिरस्तिमि-
ताभिः । अनतितरस्तिमिताभिः कमेत्ययदप्यङ्कि ष्ट-
र्तिभिरस्तिमिताभिः ॥
अलिर्मिलत्परागतः सरोरुहात्परागतः ।
सुखंमुदापरागत स्तदीयमापरागतः ॥
अथकामानलिनीनां स्त्रीणां संघैर्मनोरमानलिनीनाम्
विधुरतमानलिनीनाम्पंक्तिर्विततानसंभ्रमानलिनीनाम्
सरः श्रियोन्तरङ्गतः सरोजनृत्तरङ्गतः ।
भयं महत्तरङ्गत स्तनूजनस्तरङ्गतः ॥
अथनीरात्सारसतःफेनपरीताद्ययाम्बरात्सारसतः ।
अतिमुखरात्सारसतस्तोरमिताश्चोततिश्चिरात्सारसत
सचोदयावलीनतः समुत्प्रभावलीनतः ।
नयन्ययावलीनतः पदं जनावलीनतः ॥
दिग्धकामानं गेहंमन्यो मदनेषुविद्धतिमानं गेहं ।

इतिपरमानं गेहं नलःप्रियामनयदतिविमानं गेहं ॥
तरुणमहस्तेनेन प्रापि च सोजैर्गुणग्रहस्तनेन ।
भाव्यमिहस्तेनेन स्फुटमस्यहि तङ्गतेंशुहस्तेनेन ॥
यतो यतो यतो यतो रवेर्मरीचिसञ्चयः ।
महान्धकारसञ्चयस्ततस्ततस्ततस्ततः ॥
छादितरवितानेन प्रापिचकालेनसस्वरवितानेन ।
जितरुधिरवितानेनव्योम्नाच स्फुरितमुडुभिरवितानेन ।
अथाद्यतोम्बुराजतः श्रियं स्वमाप राजतः ।
यथा घटो व्यराजत स्मराग्रगः सराजतः ॥
दधतं कालंकालंकालंकालंवियोगिनीशशिनन्तं ।
अध्वगकालंकालंकालंकालं प्रसमीचिदुस्मोद्यन्तं ॥
चरत्तुषारशीकराः प्रबुद्धकैरवाकराः ।
ततोजजृम्भिरे करा जगत्सु शार्वरीकराः ॥
वधूस्तदानुनिन्यिरे नये नये नये नये ।
वशं नरोनयन्समुन्नते नते नते नते ॥
सहा सहावमादरैः सहा सहा स्मरस्य ते ॥
सुरा सुरा यथाव्हते सुरा सुरागमादधुः ॥
मधु प्रपीय चाभवन्नता नता नता नताः ॥
रमा रमा रमा रमाकुले जनेत्र हालया ॥
भ्रमरैर्गगस्तानिप्रपीय च मधूनिसानुरागस्तानि ॥
दत्तनिरागस्तानि प्रापच्छयनञ्जनस्वरागस्तानि ॥
ससमुद्रमहेलाभिस्फुरितगुणाभिस्ततः स्मरमहेलाभिः

श्रीःप्रवरमहेलाभिस्तथैव युवपंक्तिभिः परमहेलाभिः
तया दृष्टीरमायया मुदामनारमायया।
नलो विहारमाययावधःकृता रमायया॥

सार्थंकामायासीत्कृतिनी भैमीनलस्य कामायासीत्।
कामनिकामायासीद्युतिन्तद्दिष्टांसचाधिकामायासीत्
इतिनानामायानां नलः कलिभुवां बलेननानामाया-
नाम्। व्यसनानामायानान्निधिररमद्राजराजन्म-
नामायानाम्॥

स्वयम्बरादनन्तरं मही मही महीनधीः।
ररञ्ज नैषधस्तदा रराज राजराजराः॥

इति श्रीकालिदासकृते नलोदय सत्काव्ये
द्वितीयोल्लासः।

## तृतीयोल्लासः।

अथसुरवृषभाःस्वरतःप्रेक्ष्यकलिंप्रस्थितामहन्नास्वरतः
यः कृतिषु शुभास्वरतः पप्रच्छुस्तद्गतिङ्घननिभाःस्वरतः
यत्नसामायामितया हृतः श्रियाभीमदुहितृमाया-
मितया। तदधिगमायामितया स्पृहयाद्यमनुष्य-
मायामितया॥

इति विकलोमायायास्तदुक्तकचेजनोऽमलोमायायाः।
शुभशीलोमायायाःस्थितोनलोऽस्यावरोऽनुलोमायायाः
वचइतिवस्यादिव्यः श्रुत्वाकलिकत्सवासवस्यादिव्यः।

मखसर्वं स्वादिभ्य स्तु कोपदोषात्समदभुवः स्वादिभ्यः॥
प्रबलतमानबलतया संयोजयनलेसुरोत्तमानवलतया।
तेनामानवलतया तद्गणैवतयाद्धृतां नमानवलनया॥
इति वलवानन्तरतः कलिः किलैतज्जगादवानन्तरतः।
अवहितवानन्तरतः सम्हिषुनलस्य विविशिवानन्तरतः
सोऽथ सदारोदरतःपुष्करविजितोनलःसदारोदरतः
व्यजाददारोदरतः स्वपुरान्निर्यातवानुदारोदरतः॥
असमानानाहारिः स्वैनं शब्दांश्च किममुनानाहारि।
अपितेनानाहारि भ्रान्तम्भूयसमपाद्य नानाहारि॥
शुचमकरोदन्यस्य भ्रमन्नलः पथिपदं सरोदन्नस्य।
नचपुनरोदन्यस्य लाणायाभूत् परस्परोदन्यस्य॥
नास्य रमानावासस्तत्र खगाजहुरर्थ्यमानावासः।
अपिमदमानावासस्वरोषजलधिन्तरन्नमानावासः॥
तापघ्रतेनवसानौद्रवेदितीभौनगाद्दतेनवसानौ।
चेलान्ते नवसानौ चेरतुरेकेन पर्वतेनवसानौ॥
तद्वासः स्वापायान्नीतिरियञ्चेति विपदिसस्वापायाम्
निजवासःस्वापायान्निहत्यताममुञ्चदिह सस्वापायाम
बभ्रामानस्तेन श्रमेण कलिना विधूयमानस्तेन।
सहिरिपुमानस्तेनःस्वभाग्यदोषाःक्व समहिमानस्तेन॥

स्वगकुलमारसदाविस्रममभितापातुरोममार-सदावि। स्फुरिततमारसदाविस्तृतानगायत्वविपिनमारसदावि॥

शोकभरोदस्तेनश्रुतःसचनलाद्द्वेतिरोदस्तेन ।
इतिमकरोदस्तेन स्वयमित्यूचेभयं पुरोदस्तेन ॥
क्व भवान् ध्वंसत्वस्यत्वापदमित्याश्रयोनुध्वंसत्वस्य ।
तन्देध्वंसत्वस्य प्राप नलः सत्वरोम्ध्वंसत्वस्य ॥
अथपवनाशमयन्तं क्वापिदवाग्नौददर्शनाशमयन्तम् ।
स्वबलेनाशमयन्तं रुजमर्जिष्टत्वमपुनरनाशमयन्तम् ॥
सचधृतनागस्तेन स्वविषेणविस्फुलितोमनागस्तेन ।
सहितोनागस्तेन प्रोक्तस्त्वात्मास्तु वेदनागस्तेन ॥
स्यात्तरसाकल्यन्ते वपुरमुनात्तेन वाससाकल्यन्ते ।
येयन्नसाकल्यन्ते गुणोदयैर्दधतिभूतिसाकल्यन्ते ॥
अपिचविनामानेनश्वयणीयःसर्तुपर्णनामानेन ।
स्वांगेनामानेन स्वविपदीनहि नणां क्व नामानेन ॥
व्रजसुखमायाहीनश्रीरित्यन्तर्हितःश्रमायाहीनः ।
स्निग्धोमायाहीनःस्याज्जनतायाः क्वनोत्तमायाहीनः ॥
प्रीतिवशादनवनतःकृत्वातद्वसनमात्मसादनवनतः ।
वव्हूमांसादनवनतः सोऽस्मादृतुपर्णमाससादनवनतः ॥
अकृतमुदायन्तारन्तमनुतसोऽध्वनोयदायन्तारम् ।
ध्वनिसमुदायन्तारन्दधतोश्वहयाश्वतन्तदायन्तारम् ॥
अथ सहसादमयन्त्या सादमयन्त्यात्मशर्मनिद्रामुमुचे ।
जीवितसादमयन्त्यासादमयन्त्यागमकृतसचयदातस्या
सान ससादारामा सीतेव वासमास्तसादारामा ।
या प्रासादारामानुपत्य भर्त्रा रतिं रसादारामा ॥

तत्र पदेव्यालीनामथ विभ्रान्तं वने च देव्यालीनां ।
तरुष्टन्देव्यालीनान्ततिन्दधाने तथास्य देव्यालीनां ॥
वेगवलापासितया वेश्या भैमीयुता ललापासितया ।
नृपसकलापासितयाहत्वारीन्बान्धवान्किलापासितय
सकथंमानवनानान्यायविदाचरसि सेव्यमानवनानाम्।
धृतसोमानवनानान्दाराणान्त्यागमनुपमानवनानाम्
परकृतमेतत्त्वेन: स्मराभियन्न स्मृतोऽसि समेतत्त्वेन ।
दोषसमेतत्वेन प्रदूषये नात्र संभ्रमेतत्त्वेन ॥
हृदयौकायस्ते न स्थीयेत यथैव पावकायस्ते न ।
यावत्कायस्ते न त्यजेरत स्वहृदि चाधिकायस्ते न ॥
यस्य पदेशङ्कमितः स्वजनोयं प्राप्यजनपदे शङ्कमितः ।
अरिष्टन्देशङ्कमितस्मित सत्वमुपागतोऽसि देशङ्कमितः॥
यद्यश्यसानुकरोदः कुहरं योद्रेष्टुरञ्जसानुकरोदः ।
अद्रेः सानुकरोदः किमाप्रदर्शयितोममेतिसानुकरोद ॥
थयकलनामानन्ते त्वयञ्जनोददति चाङ्गनामानन्ते ।
हार्दे नामानन्ते जनमेनमशोककुरुसनामानन्ते ॥
उच्चशिरोदाराबालप्येति वने सुबन्धुरोदारा वा ।
इतिमकरोदारावारुच्चं मरुतलमथोसरोदारावा ॥
मृगकुलमारव्याधिप्रचुरं विभ्रद्वनं समारव्याधि ।
वीथ्या मारव्याधिष्ठितभुजगम्भीमजेयमारव्याधि ॥
सास्यवनासारासावेगमना भीमनन्दनासारासा ।
सुनयननासारासावजगरमग्रासि चामुनासारासा ॥

अथ वरोहास्यन्तं स्वामूं स्वदसूं स्वरिपुतरोहास्यन्तम्
समधिरुरोहान्तं न्यस्यतदास्येकरोत् खरोहास्यन्तम्॥
ताम्पुनरेकामयतः क्ष्मां किरातः स्मरातिरेकामयत।
कान्तारेकामयत स्त्रियं न कांचे द्रुमह्वरेकामयतः॥
हृतघनमह्यन्तेन वातासि मया ननु त्वमह्यन्तेन।
मानिनिमह्यन्तेनप्रसीदशरणागताः क्षमह्यन्तेन॥
सुमुखनिशापेतेनः स्मरदासानिति प्रोच्यवशापेतेन।
दत्ते शापेतेन स्थितयासास्वेन चलद्दशापेतेन॥
दग्धसरागाहितयादमयन्त्याविपिनभूःपरागाहितया।
उच्चतरागाहितया दृष्ट्या घोराच कन्दरागाहितया॥
पदवा पदवा पदवा पदवारयतोद्रिवनंविखलापचसा।
तरसान्तरसान्तरसान्तरसान्वयदुःखदृशीव्यसखेमरणम्
दृककोपपुरःसरमा सरमासरमा सरमा भवताननुसा
किमतेदयितादयतोदयतोदयतोदयतोस्तिममेहसुखम्
अयि राक्षसभक्षयमांक्षुधितो नवसा नवसा नवसा-
नवसाः। रुजमुज्झजनेवचक्षेकरुणान्तरदान्तरदा
न्तरदान्तरदाम्॥
करमाकरमाकरमाकरमाकलयव्यसनंममपाहिहरे।
दरतोदरतोदरतोदरतोविरुतैर्मरुतां सुकरत्वमपि॥
त्वदरिर्निषधेश सम्यङ्डिमनारमयारमयारमयारमयाः
व्यसनन्त्वमुपैमिकदानुसभोशमनाशमनाशमनाशमन।
यमनायमनायमनायमनागभिवीक्ष्यरतन्द्रवतीह्वपरः।

सरुषोनिषधक्षितिनाथ गलन्नवमानवमानवमानवमाः
नयमानयमानयमानयमावसएत्यनिवासममुष्मवता ।
भवनीयमघायमरीनुदयान्नयतानयतानयतानयता ॥
सनयासनयासनयासनयाह्यसुहृद्दयाविपदंस्वपदम् ।
हितदेहितदेहितदेहितदेत्यलपद्गङ्गधानरदेवसुता ॥
साविधराधावन्तं रतौघं क्वापिनिरपराधावन्तम् ।
सार्थं राधावन्तं प्रैक्षिष्टापच्च सुतनु राधावन्तम् ॥
व्याकुलयेवारितयाविधेर्गतिरनेनसिद्धयेवारितया ।
अपिचवयेवारितयायथाशफर्य्याजलोच्चयेवारितया ॥
प्रतिषिद्धान्यायस्य प्रापि सुवाहोस्य राजधान्यायस्य ।
वङ्गधनधान्यायस्य प्रभुर्दन्दानिबङ्गविधान्यायस्य ॥
सञ्छन्नामालासानन्दं राज्ञोभ्रताच नामालासा ।
शोकेनामालासावत्वसद्धतदेहयापनामालासा ॥
पदा पदापरिभ्रमन्नयेनयापदा पदा ।
वना वना वनाथवत्मजीवना वनाभवत् ॥

इति श्रीकालिदासकृते नलोदये सत्काव्ये
तृतीयोल्लासः ।

## चतुर्थोल्लासः ।

अथतुङ्गोपायस्य श्रवणेन नलस्य सानगोपायस्य ।
वणगा गोपायस्य स्वमनोभीमश्चिरं जुगोपायस्य ॥
निशिचदिवाचार्य्यस्य हतस्यनलविचिन्तयेयवाचार्य्यस्य

त्वग्रमेवाचार्य्यस्य द्विजोत्तमैः शिष्यकैरिवाचार्य्यस्य ॥
अथनयनेत्रासादिप्रचुरापूः केनचिज्जनेत्रासादि ।
यत्नसुनेत्रासादिग्भ्रममेणदुःखङ्गतावनेत्रासादि ॥
सहृदीनायततेनस्वगृहञ्च मैमीययेसुनायततेन ।
स्वनयेनायततेनप्राप्तैस्त्वामेवास्वशोमनायततेन ॥
वसनांशस्यस्तेनक्वासिममायं विधिर्यशस्यस्तेन ।
छन्नविशस्यस्तेनस्वजनेनभ्रूतेनभर्वासिशस्यस्तेन ॥
सजनस्तेनागादिक्वामीतिजनेनतन्मतेनागादि ।
भर्तृक्षतेनागादिस्यदैनभुविवस्तु परिहृते नागादि ॥
कोप्यूचेतनयायाः पदमेत्यनृपस्य तेषु चेतनयायाः ।
भीर्भुञ्जेतनयायादर्त्तिस्त्वांदुःसहाचचेतनयाया ॥
निजधामेतं समयान्वतुपर्णं श्रावितोऽर्थमेतं समया ।
सचिवसमेतं समयागिरोत्तरं नाजनिष्टमेतं समया ॥
दीनानायतनस्योनानायतनच्चमेऽस्य सौत्येधिकृतः ।
नानायतनकरो लोनानायतनः पथ्यु वाचाथ रहः ॥
दीनायानायतयाविलासमेऽस्मेविहीनयानायतया ।
नखलुभियानायतयाक्रोधव्यन्भर्मनिस्वयानायतया ॥
कृतकर्मानेनत्वागतोऽस्मिवचसेतितस्यमानेनत्वा ।
वेदयमानेनत्वा विप्र च धनेषु दीयमानेनत्वा ॥
तत्रापर्णायततस्वनयाद्भैमो तपस्यपर्णायतत ।
तुलितसुपर्णायततस्तस्यागमनायसर्त्तुपर्णायततः ॥
साकृतसामान्येनश्रावितवत्यसुमनन्यसामान्येन ।

स्वं रहसामान्येन स्वयम्बरं स्मरतिनाङ्गसामान्येनः ॥
रहसि तदासन्नाहस्थितः स्म स नलं युतो मुदासन्नाह ।
श्रीस्तु मदासन्नाहस्फुटं प्रयामो व्रजेदितिव्यदासन्नाहः
सा वनितावध्वानः स्वगुणैः कर्षतिके हृतास्म बध्वान ।
समहस्तावद्ध्वानः स्वद्रुतियोजनशतं मितावध्वानः ॥
तत्वरयामायामः प्रणयैर्यद्दिमानितत्नियामायामः ।
नलजायामायामस्मृत्वेत्यूचे ऽङ्ग दुर्द्दियामायामः ॥
मां भजमानाम्त्वः स्यान्नूनमसौ तत्प्रणोद्यमानाम्वःस्वां ।
इतिमतिमानाम्बस्यान्यायमनार्घां स्यविकृतिमानाम्बस्वां ॥
अथ रथमारावन्तं शस्त्राणिनलः शुभाम्बमारावन्तं ।
स जगामारावन्तं नृपतिमारोप्य च गुरुतमारावन्तं ॥
स्वांसक्तावसनस्य क्षणदूरत्वेन सङ्गतावसनस्य ।
भूभर्त्तावसनस्य व्यस्मयत रयद्रुतेर्धुतावसनस्य ॥
फलगणनादक्षस्य व्यधिततदासोम्बनोदनादक्षस्य ।
तपसि च नादक्षस्य प्रहर्षणं हृदयबोधनादक्षस्य ॥
बलजितदेवार्य्याभ्यां विद्याविनिमयो युगपदेवार्य्याभ्यां
संमर्दैवार्य्याभ्यां व्यधायि संस्पृश्य सम्पदे वार्य्याभ्यां ॥
तदनुद्रुतमक्षमतः स्वोक्त्यास्वदहनेभिकृतमक्षमतः ।
कलिरुन्नतमक्षमतः स्फुटमेव गतोनलस्तुनतमक्षमत ॥
पतितमलसमेतस्या भैम्याकपिर्विद्विमानलसमेतस्याः ।
आर्त्यंनलसमेतस्यार्थितस्य शरणप्रदोनलसमेतःस्याः
कलिमितिनानामायं नमन्तममुञ्चन्महामनातामायं ।

कीर्तिधनानामायं सदधातिहरन्तिरिपुजनानामायं॥
अथनुन्नाम्बस्तेनप्राग्स्थितराजामहात्मनोम्बस्तेन।
मालनाम्बस्तेनस्यादितिहसताविरोधिनाम्बस्तेन॥
सोयमनेनायततामिष्ट इति नलःसमन्वनेनायततां।
वहति दिनेनायततांपुरीम्प्रियेणाश्रिताञ्जनेनायततां॥
कर्तुम्मानन्तेनश्च मद्दूतिनीलोभुवोऽयमानन्तेनः।
स्वन्धामानन्तेन प्रेम्णाभीमेन जितविमानन्तेन॥
सज्जनतामहितस्य व्यग्रेतरलोकहृचितामहितस्य।
सद्विषतामहितस्य इतं पुरस्येच्चणात्ततामहितस्य॥
प्रथिततमायामायां शुचिरथवसतावनुत्तमायामायां।
चारुतमायामायान्नलःस्मरन्वासमसुसमायामायां॥
तं स्वनयानन्तरसान्निध्यगतमवेत्यनुन्नयानन्तरसा।
अभ्युदयानन्तरसावधितमुदानैषधप्रियानन्तरसा॥
तन्नुन्नालीकेन स्वीयतद्दूत्यव सुमुखनालीकेन।
किंहीनालीकेनस्वकमित्राक्तर्त्तारिपुजनालीकेन॥
तंसाम्नामानयतः परीच्च्य बहुधागुणाभिरामानयतः।
स्वजनगिरामानयतःस्ववयस्यावसतिमपिपरामानयत
तरसैवासावासस्वांविक्षतिमहेबहन्सुवासावासः।
स्थिरभावासावासद्विरधस्वारंस्तनृपतिवासावासः॥
नृपधामनिशान्तेनव्यतीत्य भैमीसमागमनिशान्तेन।
द्विषतामनिशान्तेन श्वशुरोद्दिष्टःस्थितोत्तमनिशान्तेन॥
धृतजडिमानेहासीद्दवपर्णापिप्रहश्यमानेहासी।

आत्मसमानेहासीदभिपूज्यैनं नलोरिमानेहासी ॥
सामुसमासामासस्वयमत्र पुरे नलोयमासामास ।
स्त्रीणामासामासश्च ममसुनानार्थि सुमुखमासामासः ॥
अयमहदाराजितया स्वपुरञ्चस्वानलस्तदाराजितया ।
मासिगदाराजितया पुष्करमभ्यधादुदाराजितया ॥
मयिगहनामायासि त्वया मनोनात्ममानिनामायासि ।
धनुरवनामायासि द्यूतायालं क्वचेततमायासि ॥
इत्युक्तोदैवनतःसोऽर्थत्रभवत्पुष्करःप्रमादैवनतः ।
येनसर्वविभिदेवनतःपुरावनेश्रममपिप्रपेदेवनतः ॥
सचराजायततेनद्यूतेऽसुपर्णेजितोव्यजायततेन ।
निर्व्याजायततेनत्यक्त्वागमस्सुगतरजायततेन ॥
अयिभवनैलायस्वस्वभुवं पुष्करमुदञ्चनेलायस्व ।
युगवलनेलायस्वस्नेहायपुरेव विमलनेलायस्वः ॥
हरिपवनयमानस्यःस्ववलादितितुलयतोनुनयमानस्य ।
स्नेहानयमानस्य प्रणतिमधात्पुष्करःसुनयमानस्य ॥
अरिसेनानाशस्याश्रितवत्सलतेऽस्तु चेतनानाशस्या ।
पूरितनानाशस्यास्तोकयशोभिः कदापिनानाशःस्याः ॥
इतिसननामनलस्यप्रणतोंघ्रीफुल्लवक्त्रनामनलस्य ।
अहितानामनलस्य प्रययौ सार्द्धं तेननामनलस्य ॥
मुदममुनामुक्तेन प्राप्य सुराज्यं महात्मनामुक्तेन ।
धृतनानामुक्तेन राज्यञ्चिरमाशासिविघट्टनामुक्तेन ॥

अरिसंहतिरथ्य वनेषु शुचाम्पदमापदमापदमापदमा
सुखदञ्च यथैव जनायहरिं यतमायतमायतमायतमा
नलेन पुर्य्यता यता यता यता पुरेवसा।
सदायमुन्महा महा महा महा स्तसम्पदम्॥

इति श्रीकालिदासकृते नलोदये सत्काव्ये
चतुर्थोल्लासः समाप्तः।

## घटकर्पर।

निचितं खमुपेत्य नीरदैः।
प्रियहीना हृदयावनीरदैः॥
सलिलैर्निहितं रजः क्षितौ।
रविचन्द्रावपि नोपलक्षितौ॥१॥
हंसा नदन्मेघभयाद् द्रवन्ति।
निशामुखान्यद्यनचन्द्रवन्ति॥
नवाम्बुमत्ताः शिखिनो नदन्ति।
मेघागमे कुन्दसमानदन्ति॥२॥
मेघावृतं निशि न भाति नभो वितारम्।
निद्राभ्युपैति च हरिं सुखसेवितारम्॥
सेन्द्रायुधश्च जलदोधरसन्निभानाम्।
संरम्भमावहति भूधरसन्निभानाम्॥३॥

सतडिज्जलदार्पितं नगेषु।
स्वनदम्भोधरभीतपन्नगेषु॥
परिधीररवं जलं दरीषु।
प्रपतत्यद्भुतरूपसुन्दरीषु॥४॥
क्षिप्रं प्रसादयति संप्रति कोपितानि।
कान्तामुखानि रतिविग्रहकोपितानि॥
उत्कण्ठयन्ति पथिकान् जलदाः स्वनन्तः।
शोकः समुद्भवति तद्वनितास्वनन्तः॥५॥
छादिते दिनकरस्य भावने।
खाज्जले पतति शोकभावने॥
मन्मथे च हृदि हन्तुमुद्यते।
प्रोषितप्रमदयेदमुद्यते॥६॥
सर्वकालमवलंघ्य तोयदा।
आगता स्थ दयितो गतो यदा॥
निर्घृणेन परदेशसेविना।
मारयिष्यथ हतेन मां विना॥७॥
ब्रूत तं पथिकपांशुलं घनाः।
यूयमेव पथि शीघ्रलंघनाः॥
अन्यदेशरतिरद्य मुच्यताम्।
साथ वा तव वधूः किमुच्यताम्॥८॥
हंसपंक्तिरपि नाथ संप्रति॥
प्रस्थिता वियति मानसं प्रति॥

चातकोऽपि तृषितोऽम्बु याचते।
दुःखिता पथिक सा प्रिया च ते ॥९॥
नीलशष्पमभिभाति कोमलम्।
वारि विन्दति च चातकोऽमलम् ॥
अम्बुदैः शिखिगणो विनाद्यते।
का रतिर्दयितया विनाद्य ते ॥१०॥
मेघशब्दमुदिताः कलापिनः।
प्रोषिताहृदयशोककलापिनः ॥
तोयदागमकृशापि साद्य ते।
दुर्धरेण मदनेन साद्यते ॥११॥
किं कृपापि तव नास्ति कान्तया।
पाण्डुगण्डपतितालकान्तया ॥
शोकसागरजलेऽद्य पातिताम्।
त्वद्गुणस्मरणमेव पाति ताम् ॥१२॥
कुसुमितकुटजेषु काननेषु।
प्रियरहितेषु समुत्सुकाननेषु ॥
वहति च कलुषे जले नदीनाम्।
किमिति च मां समवेक्षसे न दीनाम् ॥१३॥
मार्गेषु मेघसलिलेन विनाशितेषु।
कामे धनुः स्पृशति तेन विनाशितेषु ॥
गम्भीरमेघरसितव्यथिता कदाहम्।
जह्यां सखि प्रियवियोगजशोकदाहम् ॥१४॥

सुसुगन्धतया वनेजितानाम् ।
स्वनदम्भोधरवायुवीजितानाम् ॥
मदनस्य कृते निकेतकानाम् ।
प्रतिभान्त्यद्य वनानि केतकानाम् ॥१५॥
तत् साधु यत् त्वां सुतरं ससर्ज ।
प्रजापतिः कामनिवास सर्ज ॥
त्वं मञ्जरीभिः प्रवरो वनानाम् ।
नेत्रोत्सवश्चासि सयौवनानाम् ॥१६॥
नवकदम्ब शिरोवनतास्मि ते ।
वसति यन्मदनः कुसुमस्मिते ॥
कुटज किं कुसुमैरुपहस्यते ।
निपतितास्मि सुदुःप्रसहस्य ते ॥१७॥
तरुवर विनतास्मि ते सदाहम् ।
हृदयं मे प्रकरोषि किं सदाहम् ॥
तव कुसुमनिरीक्षणे पदेहम् ।
विसृजेयं सहसैव नीपदेहम् ॥१८॥
कुसुमैरुपशोभितां सितैर् ।
घनमुक्ताम्बुलवप्रकाशितैः ॥
मधुनः समवेक्ष्य कालताम् ।
भ्रमरश्चुम्बति यूथिकालताम् ॥१९॥
तासामृतुः सफल एव हि या दिनेषु ।
सेन्द्रायुधाम्बुधरगर्जितदुर्दिनेषु ॥

रत्युत्सवं प्रियतमैः सह मानयन्ति।
मेघागमे प्रियसखीश्च समानयन्ति ॥२०॥
एतन्निशम्य विरहानलपीडितायास्।
तस्या वचः खलु दयालुरपीडितायाः॥
खं स्वारवेण कथितं जलदैरमोघैः।
प्रत्याययौ स गृहमनदिनैरमोघैः॥२१॥
आलम्ब्य चाम्बु तृषितः करकोषपेयम्।
भावानुरक्तवनितासुरतैः शपेयम्॥
जीयेय येन कविना यमकैः परेण।
तस्मै वहेयमुदकं घटकर्परेण ॥२२॥

इति श्रीघटकर्परकविकृतं यमककाव्यं
समाप्तम्॥

---

## अमरुशतकम्।

ज्याकृष्टिबद्धखटकामुखपाणिपृष्ठ
प्रेङ्खन्नखांशुचयसम्वलितोऽम्बिकायाः।
त्वां पातु मञ्जरितपल्लवकर्णपूर
लोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः॥१॥
चिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण।

आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिःसाश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधःसदहतुदुरितं शाम्भवोवःशराग्निः॥२
आलोलामलकावलीं विलुलितां विभ्रच्चलत्कुण्डलं
किञ्चिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसः शीकरैः ।
तन्व्या यत् सुरतान्ततान्तनयनं वक्त्रं रतिव्यत्यये
तत् त्वां पातुचिराह किं हरिहरब्रह्मादिभिर्दैवतैः॥३
अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलै र्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाद्य विलोक्यते ॥४॥
दत्तोऽस्याः प्रणयस्त्वयैव भवता चेयं चिरं लालिता
दैवादद्य किलत्वमेव कृतवानस्या नवं विप्रियम् ।
मन्युर्दुःसहएष यात्युपशमं नो शान्तवादैः स्फुटं
हे निस्त्रिंश विमुक्तकण्ठकरुणं तावत् सखीरोदितु॥५॥
लिखन्नास्ते भूमिं वहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैस्
तवावस्था चेयं विसृज कठिने मानमधुना ॥६॥
नार्यस्तन्वि हठाद्धरन्ति रमणं तिष्ठन्ति नो वारितास्
तत् किं ताम्यसि किञ्चरोदिषिमुधातासां प्रियंमाकृथा
कान्तः केलिरुचिर्युवा सहृदयस्तादृक् पतिः कातरे
किन्नो वर्करकर्करैः प्रियशतैराक्रम्य विक्रीयते॥ ७॥

कोपात् कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा केलिनिकेतनं दयितया सायं सखीनां पुरः ।
भूयोऽप्येवमिति स्खलन् मृदुगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्याहसन् ॥ ८

प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेऽथवा
किमुत सकले जाते वाह्नि प्रिय त्वमेष्यसि ।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बालालापैः सवाष्पगलज्जलैः ॥ ९ ॥

याताः किन्न मिलन्ति सुन्दरि पुनश्चिन्तात्वया मत्कृते
नो कार्या नितरां कृशासि कथयत्येवं सवाष्पे मयि ।
लज्जामन्थरतारकेण निपतद्धाराश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥ १०

धीरं वारिधरस्य वारिकिरतः श्रुत्वा निशीथे ध्वनिं
दीर्घोच्छ्वाससमुदश्रुणा विरहिणीं बालां चिरं ध्यायता
अध्वन्येन विमुक्तकण्ठमखिलां रात्रिं तथा क्रन्दितं
ग्रामीणैर्व्रजतो जनस्य वसतिर्ग्रामे निषिद्धा यथा ॥ ११

कथमपि सखि क्रीडाकोपाद् व्रजेति मयोदिते
कठिनहृदयस्त्यक्त्वा शय्यां बलाद्गत एव सः ।
इति सरभसं ध्वस्तप्रेम्णि व्यपेतघृणे जने
पुनरपि हतव्रीडं चेतः प्रयाति करोमि किम् ॥ १२ ॥

दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वचस्
तत् प्रातर्गुरुसन्निधौ निगदतस्तस्योपहारं वधूः ।

कर्णालङ्कृतिपद्मरागशकलं विन्यस्य चञ्चूपुटे
क्रीडार्थं प्रकरोति दाडिमफलव्याजेन वाग्बन्धनम्॥१३

अज्ञानेन पराङ्मुखीं परिभवादाश्लिष्य मां दुःखितां
किं लब्धं चटुल त्वयेह नयता सौभाग्यमेतां दशाम्।
पश्यैतद्दयिता कुचव्यतिकरोन्मृष्टाङ्गरागारुणं
वक्षस्ते मलतैलपङ्कशबलैर्वेणीपदैरङ्कितम्॥१४॥

एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरतस्
ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः॥१५

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादराद्
एकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रिमकन्धरः सपुलकः प्रेमोल्लसन्मानसाम्
अन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति॥१६॥

चरणपतनप्रत्याख्यानात् प्रसादपराङ्मुखे
निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते।
व्रजति रमणे निःश्वस्योच्चैः स्तनस्थितहस्तया
नयनसलिलच्छन्नाद् दृष्टिः सखीषु निवेशिता॥१७॥

काञ्च्या गाढतरावरुद्धवसनप्रान्ता किमर्थं पुनर्
मुग्धाक्षी स्वपितीति तत्परिजनं स्वैरं प्रिये पृच्छति।
मातः सुप्तमपीह वारयति मामित्याहितक्रोधया
पर्यस्य स्वपितिच्छलेन शयने दत्तोऽवकाशस्तया॥१८॥

एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतोर्
अन्योन्यस्य हृदि स्थितेप्यनुनये संरक्षतो गौरवम् ।
दम्पत्योः शनकैरपाङ्गवलनान् मिश्रीभवच्चक्षुषोर्
भग्नो मानकलिः सहासरभसं व्यासक्तकण्ठग्रहम्॥१९

पश्यामो मयि किं प्रपद्यत इति स्थैर्यं मयालम्बितं
किं मामालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।
इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो वाष्पस्तु मुक्तस्तया॥२०॥

परिम्लाने माने मुखशशिनि तस्याः करधृते
मयि क्षीणोपाये प्रणिपतनमात्रैकशरणे ।
तया पक्ष्मप्रान्तव्रजपुटनिरुद्धेन सहसा
प्रसादो वाष्पेन स्तनतटविशीर्णेन कथितः ॥२१॥

तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ॥
इत्युक्ते क्व तदित्युदीर्य सहसा तत् संप्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात् तन्व्यापि तद्विस्मृतम्

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकां संस्पृशि ।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमाली जनः ॥२३॥

भ्रूभङ्गे रचितेपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
कार्कश्यं गमितेपि चेतसि तनूरोमाञ्चमालम्बते ।

कण्ठायामपि वाचि संस्मृतमिदं दग्धाननं जायते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिन्जने॥ २४॥

कान्ते कत्यपि वासराणि गमय त्वं मीलयित्वा दृशौ
स्वस्ति स्वस्ति निमीलयामि नयने यावन्न शून्यादिशः।
आयाता वयमागमिष्यति सुहृद्वर्गस्य भाग्योदयैः
सन्देशो वद कस्तवाभिलषितस्तीर्थेषु तोयाञ्जलिः॥ २५॥

सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्य्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः॥ २६॥

भवतु विदितं भव्यालापैरलं खलु गम्यतां
तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः ।
तव यदि तथा भूतं प्रेमप्रपन्नमिमां दशां
प्रकृतितरले का नः पीडा गते हतजीविते ॥ २७॥

उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती काञ्ची पादौ क्वणन्मणिनूपुरौ ।
प्रियमभिसरसि मुग्धे त्वं समाहतडिण्डिमा
यदि किमधिकत्रासोत्कम्पं दिशः समुदीक्षसे ॥ २८॥

प्रातः प्रातरुपागतेन जनिता निर्निद्रता चक्षुषोर्
मन्दायां मयि गौरवव्यपगमादुत्पादितं लाघवम् ।
किं मुग्धे न मया कृतं रमणधीर्मुक्ता त्वया गम्यतां
दुःखं तिष्ठसि यच्च पथ्यमधुना कर्तास्मि तत

सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत् पयोधरयुगं धत्ते सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥ ३० ॥

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवितप्रियसुहृत्सार्थः किमुत्यज्यते ॥ ३१

सन्दष्टाधरपल्लवा सचकितं हस्ताग्रमाधुन्वती
मामामुञ्च शठेति कोपवचनैरानर्त्तितभ्रूलता ।
शीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी
प्राप्तं तैरमृतं सुधैव मथितो मूढैःसुरैः सागरः ॥ ३२ ॥

सुप्तोयं सखि सुप्यतामिति गताः सख्यस्ततोऽनन्तरं
प्रेमावासितया मया सरलया न्यस्तं मुखं तन्मुखे ।
ज्ञातेऽलीकनिमीलने नयनयो धूर्त्तस्य रोमाञ्चतो
लज्जासीन्मम तेन साप्यपहृता तत्कालयोग्यैःक्रमैः ॥ ३३

कोपो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो यत्र दृष्टिः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैषमं पश्य जातं
त्वं पादान्ते लुठसि नहि मे मन्युमोक्षःखलायाः ॥ ३४ ॥

सुतनु जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित् कोप एवम्विधोऽभत् ।

इति निगदति नाथे तिर्य्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किञ्चित् ॥३५॥

गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलत् श्रीमन्नितम्बाम्बरा ।
मामामानद मातिमामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किन्नु मृता नु किं मनसि मे लीना विलीना नु
[किम् ॥३६॥

पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् ।
न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥३७॥

गते प्रेमाबन्धे प्रणयबहुमाने विगलिते
निवृत्ते सद्भावे जन इव जने गच्छति पुरः ।
तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि गतांस्तांश्च दिवसान्
न जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥३८॥

चिरविरहिणोरुत्कण्ठार्तिश्लथीकृतगात्रयोर्
नवमिव जगज्जातं भूयश्चिरादभिनन्दतोः ।
कथमपि दिने दीर्घे याते निशामधिरूढयोः
प्रसरति कथा बह्वी यूनोर्यथा न तथा रतिः ॥३९॥

दीर्घा वन्दनमालिका विरचिता दृष्ट्यैव नेन्दीवरैः
पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः
दत्तः स्वेदमुचा पयोधरयुगे नार्घ्यो न कुम्भाम्भसा
स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलम् ॥४०॥

कान्ते सागसि शायिते प्रियसखीवेषं विधायागते
भ्रान्त्यालिङ्ग्य मया रहस्यमुदितं तत्सङ्गमाकाङ्क्षया ।
मुग्धे दुष्करमेतदित्यतितरामुक्त्वा सहासं बलाद्
आलिङ्ग्य छलितास्मि तेन कितवेनाद्य प्रदोषागमे ॥४१

आशङ्क्य प्रणतिं पटान्तपिहितौ पादौ करोत्यादरात्
व्याजेनागतमावृणोति हसितं न स्पष्टमुद्वीक्षते ।
मय्यालापवति प्रतीपवचनं सख्या सहाभाषते
तस्यास्तिष्ठतु निर्भरप्रणयिता मानोऽपि रम्योदयः ॥४२

सा यावन्ति पदान्यलीकवचनैरालीजनैः शिक्षिता
तावन्त्येव कृतागसो द्रुततरं व्याहृत्य पत्युः पुरः ।
प्रारब्धा पुरतो यथा मनसिजस्याज्ञा तथा वर्त्तितुं
प्रेम्णो मौग्ध्यविभूषणस्य सहजः कोऽप्येष कान्तः क्रमः ॥

दूरादुत्सुकमागते विवलितं सम्भाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किञ्चिन्नतभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे वाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥४४॥

अङ्गानामतितानवं कथमिदं कम्पश्च कस्मात् कुतो
मुग्धे पाण्डुकपोलमाननमिति प्राणेश्वरे पृच्छति ।
तन्व्या सर्वमिदं स्वभावजमिति व्याहृत्य पक्ष्मान्तर
व्यापी वाष्पभरस्तया चलितया निःश्वस्य मुक्तोऽन्यतः ॥

पुरस्तन्व्या गोत्रस्खलनचकितोऽहं नतमुखः
प्रवृत्तो वलक्ष्यात् किमपि लिखितुं दैवहतकः ।

स्फुटो रेखान्यासः कथमपि स तादृक् परिणतो
गता येन व्यक्तं पुनरवयवैः सैव तरुणी ॥४६॥

कठिनहृदये मुञ्च भ्रान्तिं व्यलीककथाश्रितां
पिशुनवचनैर्दुःखं नेतुं न युक्तमिमं जनम् ।
किमिदमथवा सत्यं मुग्धे तया विनिश्चितं
यदभिरुचितं तन्मे कृत्वा प्रिये सुखमास्यताम् ॥४७॥

मन्दं मुद्रितपांशवः परिपतज्झङ्कारझंझामरुद्
वेगध्वस्तकुटीरकान्तरगतच्छिद्रेषु लब्धान्तराः ।
कर्मव्यग्रकुटुम्बिनीकुचतटस्वेदच्छिदः प्रावृषः
प्रारम्भे निपतन्ति कन्दलदलोल्लासाः पयोबिन्दवः ॥

पीतस्तुषारकिरणो मधुनैव सार्द्धम्
अन्तः प्रविश्य चषके प्रतिबिम्बवर्त्ती ।
मानान्धकारमपि मानवतीजनस्य
नूनं बिभेद यदसौ प्रससाद सद्यः ॥४८॥

नभसि जलदलक्ष्मीं संभृतां वीक्ष्य दृष्ट्या
प्रसरसि यदि कान्तेत्यर्द्धमुक्त्वा कथञ्चित् ।
मम पटमवलम्ब्य प्रोल्लिखन्ती धरित्रीं
तदनुकृतवती सा यत्र वाचो निवृत्ताः ॥५०॥

इयमसौ तरलायतलोचना
गुरुसमुन्नतपीनपयोधरा ।
पृथुनितम्बभरालसगामिनी
प्रियतमा मम जीवितहारिणी ॥५१॥

सालक्तकेन नवपल्लवकोमलेन
पादेन नूपुरवता मदनालसेन ।
यस्ताड्यते दयितया प्रणयापराधात्
सोऽङ्गीकृतो भगवता मकरध्वजेन ॥५२॥
बालेनाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत् किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन् मम का तवास्मि दयिता नास्मीत्यतो रुद्यते॥
नीत्वोच्चैर्विक्षिपन्तः कृततुहिनकणासारसङ्गान्परागान्
कौन्दानानन्दिताली नतितरसुरभीन्भूरिशो दिङ्मुखेषु
एते ते कुङ्कुमाक्तस्तनकलसभरास्फालनादुच्छलन्तः
पीत्वा शीत्कारिवक्त्रं शिशुहरिणदृशां हैमना वान्ति वाताः
श्रुत्वा तन्व्या निशीथे नवघनरसितं विश्लथाङ्गं पतित्वा
शय्यायां भूमिपृष्ठे करतलधृतया दुःखितालीजनेन ।
सोत्कण्ठं मुक्तकण्ठं कठिनकुचतटाघातशीर्णाश्रुबिन्दु
श्रुत्वा प्रियस्य स्खलितमृदुवचो रुद्यते पान्थवध्वा॥५॥
स्मृत्वा प्रियस्य स्खलितमृदुवचो ...
श्लिष्टः कण्ठे किमिति न मया मूढया प्राणनाथ-
श्चुम्बत्यस्मिन् वदनविधुतिः किं कृता किन्न दृष्टः ।
नोक्तः कस्मादिति नववधूचेष्टितं चिन्तयन्ती
पश्चात्तापं वहति तरुणी प्रेम्णि जाते रसज्ञा ॥५६॥
पश्चात्तापं वहति तरुणी प्रेमणि जाते रसज्ञा ॥५६॥
...
श्रुत्वा नामापि यस्य स्फुटघनपुलकं जायतेऽङ्गं समन्तात्

दृष्ट्वा यस्याननेन्दुं भवति वपुरिदं चन्द्रकान्तानुकारि।
तस्मिन्नागत्य कण्ठग्रहणसरभसस्थायिनि प्राणनाथे
भग्नामानस्य चिन्ताभवतिममपुनर्वज्रमय्याः कदानु॥५७॥

रामाणां रमणीयवक्त्रशशिनः स्वेदोदबिंदुप्लुते
व्यालोलालकवल्लरीं प्रचलयन्धुन्वन् नितम्बाम्बरम् ।
प्रातर्वाति मधौ प्रकामविकसद्राजीवराजीरजो
जालामोदमनोहरो रतिरसग्लानिं हरन्मारुतः॥५८

अङ्गं चन्दनपाण्डुपल्लवमृदुस्ताम्बूलताम्राधरो
धारायन्त्रजलाभिषेककलुषे धौताञ्जने लोचने।
अन्तःपुष्पसुगन्धिराद्रकवरी सर्वाङ्गलग्नाम्बरं
रामाणां रमणीयतां विदधति ग्रीष्मापराह्णागमे॥५९

वरमसौदिवसोनपुनर्निशा ननुनिशैव वरंनपुनर्दिवा।
उभयमेतदुपैत्वथवा क्षयं प्रियजनेन न यत्र समागमः

लोलैर्लोचनवारिभिः सशपथैः पादप्रणामैः प्रिय
रन्यास्ता विनिवारयन्ति कृपणाः प्राणेश्वरं प्रस्थितम्।
पुण्याहं व्रजमङ्गलं सुदिवसं प्रातः प्रयातस्य ते
यत्स्नेहोचितमीहितं प्रियतम त्वं निर्गतः श्रोष्यसि॥६१

लग्ना नांशुकपल्लवे भुजलता न द्वारदेशोर्पिता
नो वा पादतले तया निपतितं तिष्ठेति नोक्तं वचः ।
काले केवलमम्बुदातिमलिने गन्तुं प्रवृत्तः शठः
तन्व्या बाष्पजलौघकल्पितनदीपूरेण बद्धः प्रियः॥६२॥

न जाने संमुखायाते प्रियाणि वदति प्रिये ।
सर्वाण्यङ्गानि मे यान्ति श्रोत्रतां किमु नेत्रताम् ॥ ६३ ॥

विरहविषमः कामो वामस्तनुं कुरुते तनुं
दिवसगणनादक्षश्चासौ व्यपेतघृणो यमः ।
त्वमपि वशगो मानव्याधेर्विचिन्तय नाथ हे
किसलयमृदुर्जीवेदेवं कथं प्रमदाजनः ॥ ६४ ॥

पादासक्ते सुचिरमिह ते वामता कैव कान्ते
सन्मार्गस्थे प्रणयिनि जने कोपने कोऽपराधः ।
इत्थं तस्याः परिजनकथा कोपवेगोपशान्तौ
वाष्पोद्भेदैस्तदनु सहसा न स्थितं न प्रयातम् ॥ ६५ ॥

पुराभूदस्माकं नियतमविभिन्ना तनुरियं
ततो नु त्वं प्रेयान् वयमपि हताशाः प्रियतमाः ।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
मयाप्तं प्राणानां कुलिशकठिनानां फलमिदम् ॥ ६६ ॥

मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो ननु स मे प्राणेश्वरः श्रोष्यति ॥

पीतो यतः प्रभृति कामपिपासितेन
तस्या मयाधररसः प्रचुरः प्रियायाः ।
तृष्णा ततः प्रभृति मे द्विगुणत्वमेति
लावण्यमस्ति बहु तत्र किमत्र चित्रम् ॥ ६८ ॥

क्व प्रस्थितासि करभोरु घने निशीथे
प्राणाधिको वसति यत्र जनः प्रियो मे
एकाकिनी वद कथं न बिभेषि बाले
नन्वस्ति पुङ्खितशरो मदनः सहायः ॥५९॥
लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित् केशरदूषिते क्षणइव व्यामिल्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन दधती वायुं स्थिता तस्य सा
भ्रान्त्या धूर्त्ततया च वेपथुमती तेनानिशं चुम्बिता ॥७०
स्फुटतु हृदयं कामः करोतु तनुं तनुं
न सखि चटुलप्रेम्णा कार्य्यं पुनर्दयितेन मे ।
इति सरभसं मानोद्रेकादुदीर्य्य वचस्तया
रमणपदवी शारङ्गाक्ष्या ससंभ्रममुदीक्षिता ॥७१॥
पश्याश्लेषविशीर्णचन्दनरजःपुञ्जप्रकर्षादियं
शय्या सम्प्रति कोमलाङ्गि कठिनेत्यारोप्य मां वक्षसि ।
गाढौष्ठग्रहपीडनाकुलतया पादाग्रसन्दंशके
नाकृष्याम्बरमात्मनो यदुचितं धूर्त्तेन तत्प्रस्तुतम् ॥७२॥
कथमपि प्रत्यावृत्ते प्रिये स्खलितोत्तरे
विरहकृशया कृत्वा व्याजं प्रकल्पितमश्रुतम् ।
असहनसखीश्रोत्रप्राप्तिप्रमादससंभ्रम
प्रचलितदृशा शून्ये गेहे समुच्छ्वसितं पुनः ॥७३॥
आदृष्टिप्रसरं प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विच्छिन्नेषु पथिष्वहःपरिणतौ ध्वान्ते समुन्मीलति ।

दत्त्वैकं सशुचा गृहं प्रतिपदं पान्थस्त्रियास्मिन् क्षणे
सोऽभूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥ ७४ ॥
आयाते दयिते मनोरथशतैर्नीत्वा कथञ्चिद्दिनं
वैदग्ध्याऽपगमाज्जडे परिजने दीर्घां कथां कुर्वति ।
दष्टास्मीत्यभिधाय सत्वरतरं व्याधूय चीनांशुकं
तन्व्यङ्ग्या रतिकातरेण मनसा नीतः प्रदीपः शमम् ॥
अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृदस्
त्वया मुग्धे मानः किमिति सरले प्रेयसि कृतः ।
समाकृष्टा ह्येते प्रलयदहनोद्भासुरशिखाः
स्वहस्तेनाङ्गारास्तदलमधुनारण्यरुदितैः ॥ ७६ ॥
शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैर्
निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥
जातानोत्कलिकास्तनौ न लुलितौ गात्रं न रोमाञ्चितं
वक्त्रं स्वेदकणाञ्चितं न सहसा यावत् शठेनामुना ।
दृष्टेनैव मनोहृतं धृतिमुषा प्राणेश्वरेणाद्य मे
तत्केनापि निरूप्य माननिपुणोमानः समाधीयताम् ॥
दृष्टः कातरनेत्रया चिरतरं बद्ध्वाञ्जलिं याचितः
पश्चादंशुकपल्लवेन विधृतो निर्व्याजमालिङ्गितः ।
इत्याक्षिप्य यदा समस्तमघृणो गन्तुं प्रवृत्तः शठः
पूर्वं प्राणपरिग्रहो दयितया मुक्तस्ततो वल्लभः ॥ ७८ ॥

अङ्गुल्यग्रनखेन बाष्पसलिलं विक्षिप्य विक्षिप्य किं
तूष्णीं रोदिषि कोपने बहुतरं फूत्कृत्य रोदिष्यसि ।
यस्यास्ते पिशुनोपदेशवचनैर्मानेऽतिभूमिं गते
निर्विण्णोऽनुनयं प्रति प्रियतमो मध्यस्थतामेष्यति ॥ ८० ॥

तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयोः
तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया ।
पाणिभ्याञ्च तिरस्कृतः सपुलकः स्वेदोद्गमो गण्डयोः
सख्यः किं करवाणि यान्ति शतधा यत्कञ्चुके सन्धयः ॥

दृष्टो दूरादेव स्मितमधुरमभ्युद्गमविधिः
शिरस्याज्ञा न्यस्ता प्रतिवचनमुच्चैः प्रणमितम् ।
न दृष्टेः शैथिल्यं मिलन इति चेतो दहति मे
निगूढान्तःकोपात् कठिनहृदये संवृतिरियम् ॥ ८२ ॥

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यः कोपपराङ्मुखं शयितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणात्
माभूत् सुप्त इवैष मन्दवलितग्रीवं पुनर्वीक्षितः ॥ ८३ ॥

मलयमरुतां व्राता याता विकासितमल्लिका
परिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि ।
घन घटयितुं निःस्नेहं य एव निवर्त्तने
प्रभवति गवां किन्नश्छिन्नं स एव धनञ्जयः ॥ ८४ ॥

सं दृष्ट्वा करजक्षतं मधुमदक्षीबाविचार्येर्ष्यया
गच्छन्ती क्व नु गच्छसीति निधृता बाला पटान्ते मया ।

प्रत्यावृत्तमुखी सवाष्पनयना मां मुञ्च मुञ्चेति सा
कोपात् प्रस्फुरिताधरा यदवदत्तत् केन विस्मर्यते॥
सालक्तकं शतदलाधिककान्तिरम्यं
रत्नौघधामनिकराकणनूपुरञ्च ।
क्षिप्तं भृशं कुपितया तरलोत्पलाक्ष्या
सौभाग्यचिह्नमिव मूर्ध्नि पदं विरेजे ॥८६॥
कपोले पत्रालीकरतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः ।
मुहुः कण्ठे लग्नस्तरलयति वाष्पस्तनतटं
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥८७॥
लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोदयः ।
दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो
लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥
तप्ते महाविरहवह्निशिखावलीभिर्
आपाण्डुरस्तनतटे हृदये प्रियायाः ।
रथ्यालिवीक्षणनिवेशितलोलदृष्टेर्
नूनं छनच्छनिति वाष्पकणाः पतन्ति ॥८८॥
चिन्तामोहविनिश्चलेन मनसा मौनेन पादानतः
प्रत्याख्यानपराङ्मुखः प्रियतमो गन्तुं प्रवृत्तोऽधुना ।
सव्रीडैरलसैर्निरन्तरलुठद्वाष्पाकुलैर्लोचनैः
श्वासोत्कम्पकुचं निरीक्ष्य सुचिरं जीवाशया वारितः ॥

तन्वङ्ग्या गुरुसन्निधौ नयनजं यद्वारि संस्तम्भितं
तेनान्तर्गलितेन मन्मथशिखी सिक्तोऽनुषङ्गोद्भवः।
मन्ये तस्य निरस्यमानकिरणस्यैषा मुखेनोद्गता
श्वासामोदसमाकुलालिनिकरव्याजेन धूमावलिः॥८१

भ्रूभेदो रचितः चिरं नयनयोरभ्यस्तमामीलनं
रोद्धुं शिक्षितमादरेण हसितं मौनेभियोगः कृतः।
धैर्य्यं कर्त्तुमपि स्थिरीकृतमिदं चेतः कथञ्चिन्मया
बद्धोमानपरिग्रहे परिकरः सिद्धिस्तु दैवे स्थिता॥८२॥

देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननैर्
यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि।
उद्ग्रीवश्चरणार्द्धरुद्धवसुधः कृत्वाश्रुपूर्णां दृशौ तामाशां
पथिकस्तथापि किमपि ध्यायन्मुहुः वीक्षते॥८३॥

कोपस्त्वया हृदि कृतो यदि पङ्कजाक्षि
सोऽस्तु प्रियस्तव किमत्र विधेयमन्यत्।
आश्लेषमर्पय मदर्पितपूर्वमुच्चैः
मह्यं समर्पय समर्पितचुम्बनञ्च॥८४॥

ऊरुद्वयं मृगदृशः कदलस्य काण्डौ
मध्यञ्च वेदिरतुलं स्तनयुग्ममस्याः।
लावण्यवारिपूरितशातकुम्भ
कुम्भौ मनोजनृपतेरभिषेचनाय॥८५॥

चपलहृदये किं स्वातन्त्र्यात्तया गृहमागतः
चरणपतितः प्रेमार्द्रार्द्रः प्रियः समुपेक्षितः।

तादृत्त्वमधुना यावज्जीवं निरस्तसुखोदया
रुदितशरणा दुर्जातीनां सहस्व रुषां फलम् ॥ ९६ ॥

रात्रौ वारिभरालसाम्बुदरवोद्विग्नेन जाताश्रुणा
पान्थेनात्ममनोजदुःखपिशुनं गीतं तथोत्कण्ठया ।
आस्तां जीवितहारिणः प्रवसनालापस्य सङ्कीर्त्तनं
मानस्यापि जलाञ्जलिः सरभसं लोकेन दत्तो यथा ॥ ९७ ॥

हारो जलार्द्रवसनं नलिनीदलानि
प्रालेयशीकरमुचस्तुहिनांशुभासः ।
यस्येन्धनानि सरसानि च चन्दनानि
निर्वाणमेष्यति कथं स मनोभवाग्निः ॥ ९८ ॥

तन्वी शरत्त्रिपथगा पुलिने कपोलौ
लोले दृशौ रुचिरचञ्चलखञ्जरीटौ ।
तद्बन्धनाय सुचिरार्पितसुभ्रुचाप
चाण्डालपाशयुगलाविव स्मन्यकर्णौ ॥ ९९ ॥

हारोयं हरिणाक्षीणां लुठति स्तनमण्डले ।
मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः ॥ १०० ॥

इत्यमरुशतकं परिपूर्णम् ।

## शृङ्गारशतकम् ।

शम्भुस्वयम्भुहरयो हरिणेक्षणानां
येनाक्रियन्त सततं गृहकर्मदासाः ।
वाचामगोचरचरित्रविचित्रिताय
तस्मै नमो भगवते कुसुमायुधाय ॥१॥

स्मितेन भावेन च लज्जया भिया
पराङ्मुखैरर्द्धकटाक्षवीक्षणैः ।
वचोभिरीर्ष्याकलहेन लीलया
समस्तभावैः खलु बन्धनं स्त्रियः ॥२॥

भ्रुचातुर्याकुञ्चिताक्षाः कटाक्षाः
स्निग्धा वाचो लज्जितान्तैव हासाः ।
लीलामन्दं प्रस्थितं च स्थितञ्च
स्त्रीणामेतत् भूषणञ्चायुधञ्च ॥३॥

क्वचित्सुभ्रूभङ्गैः क्वचिदपि च लज्जापरिणतैः
क्वचिद्भीतित्रस्तैः क्वचिदपि च लीलाविलसितैः ।
नवोढानामेभिर्वदनकमलैर्नेत्रचलितैः
स्फुरन्नीलाब्जानाम्प्रकरपरिपूर्णा इव दिशः ॥४॥

वक्त्रं चन्द्रविकासि पङ्कजपरीहासक्षमे लोचने
वर्णः स्वर्णमपाकरिष्णुरलिनीजिष्णुः कचानाञ्चयः ।
वक्षोजाविभकुम्भसंभ्रमहरौ गुर्वी नितम्बस्थली
वाचां हारि च मार्दवं युवतिषु स्वाभाविकं मण्डनम् ॥

स्मितं किञ्चिद्वक्त्रे सरलतरलो दृष्टिविभवः ।
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ॥६॥
गतीनामारम्भः किसलयितलीलापरिकरः ।
स्पृशन्त्यास्तारुण्यं किमिह नहि रम्यं मृगदृशः॥७॥
द्रष्टव्येषु किमुत्तमं मृगदृशां प्रेमप्रसन्नं मुखम् ।
घ्रातव्येष्वपि किन्तदास्यपवनः श्राव्येषु किन्तद्वचः॥८॥
किं खाद्येषु तदोष्ठपल्लवरसः स्पृश्येषु किं तत्तनुः ।
ध्येयं किन्नवयौवनं सहृदयैः सर्वत्र तद्विभ्रमः ॥९॥
एताः स्खलद्वलयसंहतिमेखलोत्थ
झङ्कारनूपुररवाहृतराजहंसाः ।
कुर्वन्ति कस्य न मनो विवशं तरुण्यो
वित्रस्तमुग्धहरिणीसदृशैः कटाक्षैः ॥१०॥
कुङ्कुमपङ्ककलङ्कितदेहा गौरपयोधरकम्पितहारा ।
नूपुरहंसरणत्पदपद्मा कन्नवशीकुरुते भुवि रामा॥११॥
नूनं हि ते कविवरा विपरीतबोधा
ये नित्यमाहुरबलाइति कामिनीनाम् ।
याभिर्विलोलतरतारकदृष्टिपातैः
शक्रादयोपि विजितास्त्वबलाः कथन्ताः ॥१२॥
नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः ।
यतस्तन्नेत्रसञ्चारसूचितेषु प्रवर्त्तते ॥१३॥
केशाः संयमिनः श्रुतेरपि परं पारं गते लोचने
अन्तर्वक्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां गणः ।

मुक्तानां सततािधवासरुचिरं वक्षोजकुम्भद्वयम्
इत्थं तन्वि वपुः प्रशान्तमपि ते
क्षोभं करोत्येव नः ॥ १४ ॥

मुग्धे धनुष्मती केयमपूर्वापि च दृश्यते ।
यथाविध्यंसि चेतांसि गुणैरेव न शायिकैः ॥१५॥

सति प्रदीपे सत्यग्नौ सत्सु तारारवीन्दुषु ।
विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् ॥१६॥

यद्वृत्तस्तनभार एष तरले नेत्रे चले भ्रूलते
रागान्धेषु तदोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम् ।
सौभाग्याक्षरपंक्तिरेव लिखिता पुष्पायुधेन स्वयं
मध्यस्थापि करोति तापमधिकं रोमावली केनसा॥१७

गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता ।
शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥१८॥

तस्याः स्तनौ यदि घनौ जघनं विहारि
वक्त्रं च चारु तव चित्त किमाकुलत्वम् ।
पुण्यं कुरुष्व यदि तेषु तवास्ति वाञ्छा
पुण्यैर्विना न हि भवन्ति समीहितार्थाः ॥१९॥

मात्सर्यमुत्सार्य विचार्य कार्यम्
आर्याः समर्यादमिदं वदन्तु ।
सेव्या नितम्बाः किमु भूधराणाम्
उत स्मरस्मेरविलासिनीनाम् ॥२०॥

मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः ।
पाणिभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥२२॥
संमोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।
एताः प्रविश्य सदयं हृदयं नराणां
किन्नाम वामनयना न समाचरन्ति ॥२३॥
विश्रम्य विश्रम्य वनद्रुमाणां
छायासु तन्वी विचचार काचित् ।
स्तनोत्तरीयेण कराद्धृतेन
निवारयन्ती शशिनो मयूखान् ॥२४॥
अदर्शने दर्शनमात्रकामा
दृष्टा परिष्वङ्गरसैकलोला ।
आलिङ्गितायां पुनरायताक्ष्याम्
आशास्महे विग्रहयोरभेदम् ॥२५॥
मालती शिरसि जृम्भणोन्मुखी
चन्दनं वपुषि कुङ्कुमाविलम् ।
वक्षसि प्रियतमा मनोहरा
स्वर्गएष परिशिष्टआगतः ॥२६॥

ऋतुवर्णनं तत्रादौ वसन्तः ॥

परिमलभृतो वाताः शाखानवाङ्कुरकोटयो
मधुरविरतोत्कण्ठा वाचः प्रियाः पिकपक्षिणाम् ।

विरलसुरतस्वेदोद्गमा बधूवदनेन्दवः
प्रसरति मधौ रात्र्यां जातो न कस्य गुणोदयः ॥३५॥

मधुरयं मधुरैरपि कोकिला
कलकलैर्मलयस्य च वायुभिः ।
विरहिणः प्रणिहन्ति शरीरिणो
विपदि हन्त सुधापि विषायते ॥३६॥

आवासः किल किञ्चिदेव दयितापार्श्वे विलासालसः
कर्णे कोकिलकाकलीकलरवस्मेरो लतामण्डपः ।
गोष्ठीसत्कविभिः समं कतिपयैः सेव्याः सितांशोः कराः
केषाञ्चित्सुखयन्ति नेत्रहृदये चैत्रे विचित्राः क्षपाः ॥

पान्थस्त्रीविरहानलाहुति कलामातन्वती मञ्जरी ।
मा कुन्देषु पिकाङ्गनाभिरधुना सोत्कण्ठमालोक्यते ॥
अप्येते नवपाटलाः परिमलाः प्राग्भारपाटच्चरा ।
वान्ति क्लान्तिनतानवकृताः श्रीखण्डशैलानिलाः ॥३८॥

सहकारकुसुमकेसरनिकरभरा मोदमूर्छितादिगन्ते
मधुरमधुविधुरमधुपे मधौ भवेदुत्कण्ठा ॥४०॥

ग्रीष्मः ॥

अच्छाच्छचन्दनरसार्द्रकरा मृगाक्ष्यो
धारागृहाणि कुसुमानि च कौमुदी च ।
मन्दो मरुत्सुमनसः शुचि हर्म्यपृष्ठं
ग्रीष्मे मदञ्च मदनञ्च विवर्द्धयन्ति ॥४१॥

स्रजो हृद्यामोदा व्यजनपवनश्चन्द्रकिरणाः

परागः कासारी मलयजरजः सिन्धुविशदम्।
शुचिः सौधोत्सङ्गः प्रतनु वसनं पङ्कजदृशो
निदाघे तुर्य्यं तत्सुखमुपलभन्ते सुकृतिनः॥४२॥

सुधाशुभ्रन्धाम स्फुरदमलरश्मिः शशधरः
प्रियावक्त्राम्भोजं मलयजरजश्चातिसुरभिः।
स्रजो हृद्यामोदास्तदिदमखिलं रागिणि जने
करोत्यन्तः क्षोभं नतु विषयसंसर्गविमुखे॥४३॥

वर्षासमयः।

तरुणीवेषा दीपितकामा विकसज्जातीपुष्पसुगन्धिः।
उन्नतपीनपयोधरभारा प्रावृट् कुरुते कस्य न हर्षम्॥

वियदुपचितमेघम्भूमयः कन्दलिन्यो
नवकुटजकदम्बामोदिनो गन्धवाहाः।
शिखिकुलकलकेका एव रम्या वनान्ताः
सुखिनमसुखिनं वा सर्वमुत्कण्ठयन्ति॥४५॥

उपरि वनं घनपटलन्तिर्यग्गिरयोपि नर्तितमयूराः।
वसुधा कन्दलधवला दृष्टिं पथिकः क्व पातयतु॥४६॥

इतोविद्युद्वल्ली विलसितमितः केतकितरो
स्फुरद्गन्धः प्रोद्यज्जलदनिनदस्फूर्जितमितः।
इतः केकीक्रीडाकलकलरवः पक्ष्मलदृशां
कथं यास्यन्त्येते विरहदिवसाः सम्भृतरसाः॥४७॥

असुचिसंसारे त्वमसि नभसि प्रौढजलद
ध्वनिप्राप्ते तस्मिन् पतति दृषदां नीरनिचये।

इदं सौदामिन्याः कनककमनीयं विलसितं
मुदञ्च ग्लानिञ्च प्रथयति पथिष्वेव सुदृशाम् ॥४८॥
आसारेषु न हर्म्यतः प्रियतमैर्यातुं यदा शक्यते
शीतोत्कम्पनिमित्तमायतदृशा गाढं समालिङ्ग्यते ।
जाताः शीतलशीकराश्च मरुतो वात्यन्तखेदच्छिदो
धन्यानां वत दुर्दिनं सुदिनतां याति प्रियासङ्गमे ॥४९

शरदः ॥

अर्द्धं नीत्वा निशायाः सरभससुरतायासखिन्नश्लथाङ्ग
प्रोद्भूतासह्यतृष्णा मधुमदनिरतो हर्म्यपृष्ठे विविक्ते ।
सम्भोगक्लान्तकान्ताशिथिलभुजलतातर्जितं कर्करान्तो
ज्योत्स्नाभिन्नाधरांशं पिबति न सलिलं शारदं मन्दभाग्यः
हेमन्ते दधिदुग्धसर्पिरशना माञ्जिष्ठवासोभृताः
काश्मीरद्रवसान्द्रदिग्धवपुषः खिन्ना विचित्रै रतैः ।
पीनोरःस्थलकामिनीजनकृताश्लेषा गृहाभ्यन्तरे
ताम्बूलीदलपूगपूरितमुखा धन्याः सुखं शेरते ॥ ४१॥

शिशिरः ॥

चुम्बन्तो गण्डभित्तीरलकवति मुखे शीत्कृतान्यादधाना
वक्षःसुत्कञ्चुकेषु स्तनभरपुलकोद्भेदमापादयन्तः ।
ऊरूनाकम्पयन्तः पृथुजघनतटात् स्रंसयन्तोंऽशुकानि व्यक्तं
कान्ताजनानां विटचरितकृतः शैशिरा वान्ति वाताः ॥
केशानाकलयन् दृशो मुकुलयन्वासो बलादाक्षिपन्
आतन्वन् पुलकोद्गमं प्रकटयन्नालिङ्ग्य कम्पं शनैः ।

वारम्वारमुदारशीत्कृतकृतोदन्तच्छदान् पीडयन्
प्रायःशैशिरएषसञ्चरति मरुत् कान्तासु कान्तायते ॥

आसाराः सन्ततोमी विरति विरसायासविषया
जुगुप्सन्तां यद्वा ननु सकलदोषास्पदमिति ।
तथाप्यन्तस्तत्वे प्रणिहितधियामप्यतिवलस्
तदीयो नाख्येयः स्फुरति हृदये कोपि महिमा॥५४॥

भवन्तोवेदान्तप्रणिहितधियां सन्तु गुरवो
विदग्धालापानां वयमपि कवीनामनुचराः ।
तथाप्येतद्ब्रूमो नहि परहितात्पुण्यमधिकं
न चास्मिन् संसारे कुवलयदृशो रम्यमपरम्॥५५॥

किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापैर्
द्वयमिह पुरुषाणां सर्वदासेवनीयम् ।
अभिनवमदलीलालालसं सुन्दरीणां
स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥५६॥

सत्यं जना वच्मि न पक्षपाताल्
लोकेषु सर्वेषु च तथ्यमेतत् ।
नान्यन्मनोहारि नितम्बिनीभ्यो
दुःखैकहेतुर्न च कश्चिदन्यः ॥५७॥

दुर्विरक्तप्रशंसा ॥

तावदेव कृतिनामपि स्फुरत्येष निर्मलविवेकदीपकः ।
यावदेव न कुरङ्गचक्षुषां ताड्यते चपललोचनांचलैः ॥

वचसि भवति सङ्गत्यागमुद्दिश्य वार्ता

श्रुतिमुखरमुखानां केवलं पण्डितानाम् ।
जघनमरुणरत्नग्रन्थिकाञ्चीकलापं
कुवलयनयनानां कोविहातुं समर्थः ॥५६॥
स्वपरप्रतारकोसौ निन्दति योऽलीकं पण्डितो युवतीः।
यस्मात्तपसोपि फलं स्वर्गः स्वर्गस्यापि फलं तथासरसः
मत्तेभकुम्भदलने भुवि संतिः शूराः
केचित्प्रचण्डमृगराजवधेपि दक्षाः ।
किन्तु ब्रवीमि बलिनां पुरतः प्रसह्य
कन्दर्पदर्पदलने विरला मनुष्याः ॥६१॥
सन्मार्गे तावदास्ते प्रभवति च नरस्तावदेवेन्द्रियाणां
लज्जान्तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषोदृष्टिबाणाःपतन्ति
उन्मत्तप्रेमसंरम्भादारभते पदङ्गनाः ।
तत्र प्रत्यूहमाधातुं ब्रह्मापि खलु कातरः ॥६३॥
तावन्महत्वं पाण्डित्यं कुलीनत्वं विवेकता ।
यावज्ज्वलति नाङ्गेषु हतः पञ्चेषु पावकः ॥६४॥
शास्त्रज्ञोपि प्रथितविनयोप्यात्मबोधोपि बाढं
संसारेस्मिन् भवति विरलो भाजनं सद्गतीनाम् ।
येनैतस्मिन्निरयनगरद्वारमुद्घाटयतो
वामाक्षीणां भवति कुटिला भ्रूलता कुञ्चिकेव ॥६५॥
कृशः काणः खञ्जः श्रवणरहितः पुच्छविकले।

व्रणी पूयक्लिन्नः कृमिकुलशतैरावृततनुः ।
क्षुधाक्षामो जीर्णः पिठरककपालार्पितगलः
शुनीमन्वेति श्वा हतमपि निहन्त्येव मदनः ॥६६॥
स्त्रीमुद्रां झषकेतनस्य जननीं सर्वार्थसम्पत्करीं
ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः
ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः
केचित्पञ्चशिखीकृताश्च जटिलाः कापालिकाश्चापरे ॥
विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशना
तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।
शाल्यन्नं सघृतं पयोदधियुतं ये भुञ्जते मानवास्
तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यस्तरेत्सागरम् ॥

स्त्रीणां परित्यागप्रशंसा ॥

संसारेऽस्मिन्नसारे कुनृपतिभवनद्वारसेवावलम्ब
व्यासङ्गव्यस्तधैर्याः कथममलधियो मानसं संविदध्युः ।
यद्येताः प्रोद्यदिन्दुद्युतिनिचयभृतो न स्युरम्भोजनेत्रा
प्रेङ्खत्काञ्चीकलापाः स्तनभरविनमन्मध्यभागास्तरुण्यः
सिद्धाध्यासितकन्दरे हरवृषस्कन्धावगाढद्रुमे
गङ्गाधौतशिलातले हिमवतः स्थाने स्थितः श्रेयसि ।
कः कुर्वीत शिरःप्रणाममलिनं मानं मनस्वी जनो
यद्यत्रस्तकुरङ्गशावनयना न स्युः स्मरास्त्रं स्त्रियः ॥७०॥
संसार तव निस्तारपदवी न दवीयसी ।
अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥७१॥

यौवनप्रशंसा ॥

राजन् तृष्णाम्बुराशेर्न हि जगति गतः कश्चिदेवावसानं
को वार्थोऽर्थैः प्रभूतैः स्ववपुषि गलिते यौवने सानुरागे ।
गच्छामः सद्म यावद्विकसितकुमुदेन्दीवरालोकनीनाम्
आक्रम्याक्रम्य रूपं झटिति न जरयालुप्यते प्रेयसीनां ॥

रागस्यागारमेकं नरकशतमहादुःखसम्प्राप्तिहेतुर्
मोहस्योत्पत्तिबीजं जलधरपटलं ज्ञानताराधिपस्य ।
कंदर्पस्यैकमित्रं प्रकटितविविधस्पष्टदोषप्रबन्धं
लोकेऽस्मिन्नह्यनर्थं निजकुलदहनं यौवनादन्यदस्ति ॥

शृङ्गारद्रुमनीरदे बहुतरक्रीडारसस्रोतसि
प्रद्युम्नप्रियबान्धवे चतुरतामुक्ताफलोदन्वति ।
तन्वीनेत्रचकोरपारणविधौ सौभाग्यलक्ष्मीनिधौ
धन्यः कोपि न विक्रियां कलयति प्राप्ते नवे यौवने ॥

कामिनीगर्हणम् ।

कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युत्सुकः
पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति ।
दृष्ट्वा माद्यति मोदतेऽतिरमते प्रस्तौति जानन्नपि
प्रत्यक्षाशुचिपुत्रिकां स्त्रियमहो मोहस्य दुश्चेष्टितम् ॥

स्मृता भवति तापाय दृष्टा चोन्मादवर्द्धिनी ।
स्पृष्टा भवति मोहाय सा नाम दयिता कथम् ॥७६॥

तावदेवामृतमयी यावल्लोचनगोचरा ।
चक्षुःपथादपगता विषादप्यतिरिच्यते ॥७७॥

नामृतं न विषं किञ्चिदेकां मुक्त्वा नितम्बिनीम् ।
सैवामृतलता रक्ता विरक्ता विषवल्लरी ॥७८॥

आवर्त्तः संशयानामविनयभवनं पत्तनं साहसानां
दोषाणां सन्निधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् ।
स्वर्गद्वारस्य विघ्नो नरकपुरमुखं सर्वमायाकरण्डं
स्त्रीयन्त्रं केनसृष्टं विषममृतमयं प्राणिनां मोहपाशः॥

न सत्येन शशाङ्क एष वदनीभूतो नवेन्दीवर
द्वन्द्वं लोचनतां गतं न कनकैरप्यङ्गयष्टिः कृता ।
किन्त्वेवं कविभिः प्रतारितमनास्तत्त्वं विजानन्नपि
त्वङ्मांसास्थिमयं वपुर्मृगदृशां मन्दो जनःसेवते ॥८०

लीलावतीनां सहजा विलासास्
तएव मूढस्य हृदि स्फुरन्ति ।
रागो नलिन्या हि निसर्गसिद्धस्
तत्र भ्रमत्येव मुदा षडंघ्रिः ॥८१॥

यदेतत्पूर्णेन्दुद्युतिहरमुदाराकृतिवरं
मुखाब्जं तन्वङ्ग्याः किल वसति तत्राधरमधु ।
इदन्तावत्पाकं द्रुमफलमिवातीव विरसं
व्यतीतेऽस्मिन् काले विषमिव भविष्यत्यसुखदम् ॥८२॥

उन्मीलत्त्रिवलीतरङ्गनिलया प्रोत्तुङ्गपीनस्तन
द्वन्द्वेनोद्यतचक्रवाकमिथुनाकाराम्बुजोल्लासिनी ।
कान्ताकारधरा नदीयमभितः क्रूराशया नेष्यते
संसारार्णवमज्जनं यदि जनाद्दूरात्परं त्यज्यताम् ॥८३

२२

जल्पन्ति सार्द्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ।
हृदये चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥८४॥

मधु तिष्ठति वाचि योषितां हृदि हालाहलमेव केवलम् ।
अतएव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ॥८५॥

अपसर सखे दूरमस्मात् कटाक्षविषाग्निनलात्
प्रकृतिविषमाद्योषित्सर्पाद्विलासफणाभृतः ।
इतरफणिना दष्टाः शक्याश्चिकित्सितुमौषधयश्
चतुरवनिताभोगिग्रस्तं त्यजन्ति हि मन्त्रिणः ॥८६॥

विस्तारितं मकरकेतनधीवरेण
स्त्रीसंज्ञितं वडिशमत्र भवाम्बुराशौ ।
येनाचिरात्तदधरामिषलोलमर्त्य
मत्स्यान् विकृष्य पचतीत्यनुरागवह्नौ ॥८७॥

कामिनीकायकान्तारे कुचपर्वतदुर्गमे ।
मा सञ्चर मनः पान्थ तत्रास्ते स्मरतस्करः ॥८८॥

आदीर्घेण चलेन वक्रगतिना तेजस्विना भोगिना
नीलाब्जद्युतिनाहिना वरमहं दष्टो न तच्चक्षुषा ।
अन्याः सन्ति चिकित्सका दिशिदिशि प्रायेण धर्मार्थिनो
मुग्धाक्षीक्षणवीक्षितस्य न हि मे वैद्यो न चाप्यौषधम् ॥

इह हि मधुरगीतं नृत्यमेतद्रसोऽपि
स्फुरति परिमलोऽसौ स्पर्श एष स्तनानाम् ।
इति हतपरमार्थैरिन्द्रियैर्भ्राम्यमाणैर्
अहितकरणदक्षैः पञ्चभिर्वञ्चितोऽसि ॥९०॥

न गम्योमन्त्राणां न च भवति भैषज्यविषयो
न चापि प्रध्वंसं व्रजति विविधैः शान्तिकशतैः।
भ्रमावेशादङ्गे किमपि विदधद्भङ्गमसम
स्मरापस्मारोयम्भ्रमयति दृशं घूर्णयति च॥९१॥
जात्यन्धाय च दुर्मुखाय च जराजीर्णाखिलाङ्गायच
ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाभिभूताय च।
यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया
पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु रज्येत कः॥९२
वेश्यासौ मदनज्वालारूपेन्धनसमेधिता।
कामिभिर्यत्र हूयन्ते यौवनानि धनानि च॥९३॥
कश्चुम्बति कुलपुरुषोवेश्याधरपल्लवमनोज्ञमपि।
चारभटचौरचेटकनटविटनिष्ठीवनशरावम्॥९४॥

सुचरितप्रशंसा॥

धन्यास्तएव तरलायतलोचनानां
तारुण्यपूर्णघनपीनपयोधराणाम्।
क्षामोदरोपरिलसत्त्रिवलीलतानां
दृष्ट्वाकृतिं विकृतिमेति मनो न येषाम्॥९५॥
बाले लीलामुकुलितममी सुन्दरा दृष्टिपाताः
किं क्षिप्यन्ते विरम विरम व्यर्थएषः श्रमस्ते
संप्रत्यन्यं वयमुपरतं बाल्यमास्था वनान्ते
क्षीणोमोहस्तृणमिव जगज्जालमालोकयामः॥९६॥
इयं बाला मां प्रत्यनवरतमिन्दीवरदलं

प्रभा चौरं चक्षुः क्षिपति किमभिप्रेतमनया ।
गतोमोहोस्माकं स्मरसमरवाणव्यतिकर
ज्वरज्वालाशान्तास्तदपि न वराकी विरमति ॥९७॥

शुभ्रं सद्मसविभ्रमायुवतयः श्वेतातपत्रोज्ज्वला
लक्ष्मीरित्यनुभूयते स्थिरमिव स्फीते शुभे कर्मणि ।
विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तु किं
मुक्ताजालमिव प्रयाति झटिति भ्रश्यद्दिशोदृश्यताम् ॥

सदा योगाभ्यासव्यसनवशयोरात्ममनसोर्
अविच्छिन्ना मैत्री स्फुरति यमिनस्तस्य किमु तैः ।
प्रियाणामालापैरधरमधुभिर्वक्त्रविधुभिः
सनिश्वासामोदैः सकुचकलशाश्लेषसुरतैः ॥९८॥

किं कन्दर्पकरं कदर्थयसि किङ्कोदण्डझङ्कारितैः
रे रे कोकिल कोमलङ्कलरवङ्किन्त्वं वृथा भाषसे ।
मुग्धस्निग्धविदग्धमुग्धमधुरैर्लोलैः कटाक्षैरलं
चेतश्चुम्बति चन्द्रचूडचरणध्यानामृते वर्तते ॥१००॥

यदासीदज्ञानं स्मरतिमिरसञ्चारजनितं
तदा सर्वं नारीमयमिदमशेषं जगदभूत् ।
इदानीमस्माकं पटुतरविवेकाञ्जनदृशां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥१०१॥

इति श्रीभर्तृहरिविरचितं शृङ्गारशतकं समाप्तम् ॥

---

# नीतिशतकम् ।

यां चिन्तयामि सततं मयि सा विरक्ता
सा चान्यमिच्छति जनं स जनोन्यरक्तः ।
अस्मत्कृतेपि परितुष्यति काचिदन्या
धिक् ताञ्च तञ्च मदनञ्च इमाञ्च माञ्च ॥१॥

अज्ञः सुखमाराध्यः सुखतरमाराध्यतेऽशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं नरञ्जयति ॥२॥

लभेत सिकतासु तैलमपि यत्नतः पीडयन्
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।
कदाचिदपि पर्यटन् शशविषाणमासादयेत्
नतुप्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥३॥

प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्राङ्कुरात्
समुद्रमपि सन्तरेत् चपलमुर्मिमालाकुलम् ।
भुजङ्गमपि कोपितं शिरसि पुष्पवद्धारयेत्
नतुप्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥४॥

शशी दिवसधूसरो गलितयौवना कामिनी
सरोविगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलोमनसि सप्त शल्यानि मे ॥५॥

मणिः शाणालीढः समरविजयो हेतिनिहतो
मदक्षीणोनागः शरदि सरितः श्यामपुलिनाः ।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
न निम्नाः शोभन्ते गलितविभवाश्चार्थिषु जनाः ॥६॥

परिक्षीणः कश्चित् स्पृहयति यवानां प्रसृतये
स पश्चात्सम्पूर्णो गणयति धरित्रीं तृणसमाम् ।
अतश्चानेकान्ता गुरुलघुतयार्थेषु धनिनाम्
अवस्था वस्तूनि प्रथयति च सङ्कोचयति च ॥७॥

शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्याः प्रदेयागमा
विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः ।
तज्जाड्यं वसुधाधिपस्य सुधियो ह्यर्थं विनापीश्वराः
कुत्साः स्युः कुपरीक्षकैर्हिमणयो यैरर्थतः पातिताः॥

विपदि धैर्य्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥८॥

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥१०॥

हर्तुर्याति न गोचरं किमपि संपुष्णाति यत्सर्वदा
ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।

कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान प्रतिमानमुज्झति नृपः कस्तैः सह स्पर्धते ॥
अधिगतपरमार्थान् पण्डितान्मावमंस्था
स्तृणमिव लघुलक्ष्मीर्नैव तान् संरुणद्धि ।
अभिनवमदलेखाश्यामगण्डस्थलानां
न भवति बिसतन्तुर्वारणं वारणानाम् ॥१२॥
क्षुत्क्षामोपि जराकृशोपि शिथिलप्राणोपि कष्टान्दशाम् ।
आपन्नोपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि ।
उन्मत्तेभविभिन्नकुम्भकवलग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केशरी ॥१३॥
असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः
प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेप्यसुकरम् ।
विपद्युच्चैः स्थेयं पदमनुविधेयञ्च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥१४॥
मनसि वचसि काये पुण्यपीयूषपूर्णा
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणुं पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥१५॥
इतः स्वपिति केशवः कुलमितस्तदीयद्विषाम्
इतश्च शरणार्थिनः शिखरिपत्रिणः शेरते ।
इतश्च वडवानलः सह समस्तसम्वर्त्तकैर्
अहो विततमूर्जितम्भरसहञ्च सिन्धोर्वपुः ॥१६॥

उदन्वाच्छन्ना भूः स च निधिरपां योजनशतं
सदा पान्थः पूषा गगणपरिमाणं कलयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयताम् ॥१७॥

क्वचिद्भूमीशय्यः क्वचिदपि च पर्य्यङ्कशयनः
क्वचिच्छाकाहारः क्वचिदपि च शाल्योदनरुचिः ।
क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्य्यार्थी न गणयति दुःखन्नच सुखम् ॥१८॥

ये सन्तोषसुखप्रमोदमुदितास्तेषान्न भिन्ना मुदो
ये त्वन्ये धनलोभसङ्कुलधियस्तेषान्न तृष्णा हता ।
इत्थं कस्य कृते कृतः स विधिना तादृक् पदं सम्पदां
स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते

नमस्यामो देवान्ननु हतविधेस्तेपि वशगा
विधिर्वन्द्यः सोपि प्रतिनियतकर्मैकफलदः ।
फलङ्कर्मायत्तं यदि किममरैः किञ्च विधिना
नमस्तत्कर्मभ्यो विधरपि न येभ्यः प्रभवति ॥२०॥

दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालनात्
विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् ।
ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयात्
मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥२१॥

रक्तत्वं कमलानां सुपुरुषाणां परोपकारित्वम् ।
असताञ्च निर्दयत्वं स्वभावसिद्धिस्त्रिषु त्रितयम् ॥२२॥

जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं
शूरे निर्घृणता ऋजौ विमतिता दैन्यं प्रियालापिनि ।
तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे
तत्कोनामगुणोभवेत्सुगुणिनां योदुर्जनैर्नाङ्कितः॥२३॥

जातिर्यातु रसातलं गुणगणस्तस्याप्यधोगच्छतां
शीलं शैलतटात्पतत्वभिजनः सन्दह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु पततु त्वर्थस्तु न केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ताइमे॥२४॥

भग्नाशस्य करण्डपीडिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
स्वस्थास्तिष्ठत दैवमेव हि नृणां वृद्धौक्षयेकारणम्॥२५

पतितोऽपि कराघातैरुत्पतत्येव कन्दुकः ।
प्रायेण साधुवृत्तीनामस्थायिन्यो विपत्तयः ॥२६॥

प्रायः कन्दुकपातेन पतत्यार्यः पतन्नपि ।
तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ॥२७॥

प्रीणाति यः सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत्कलत्रम् ।
तन्मित्रमापदि सुखे च समं प्रयाति
एतत्त्रयं जगति पुण्यकृतो लभन्ते ॥२८॥

सम्पत्सु महतां चित्तम्भवेदुत्पलकोमलम् ।
आपत्सु च महाशैलशिलासङ्घातकर्कशम् ॥२९॥

दुर्जनः परिहर्त्तव्यो विद्ययापि समन्वितः ।
मणिनालङ्कृतः सर्पः किमसौ न भयङ्करः ॥३०॥

क्षीरेणात्मगतोदकाय हि गुणा दत्ता पुरातेऽखिलाः
क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः।
गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी॥३१

या साधून् हि खलान् करोति विदुषो मूर्खान् हितान्
द्वेषिणःप्रत्यक्षं कुरुतेपरोक्षममृतं हलाहलं तत्क्षणात्
तामाराधय शङ्करीम्भगवतीन्द्राली फलं वांछितं हे
साधो त्वमतो गुणेषु विफलेष्वास्थां वृथा मा कृथाः ॥

कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं
निरुपमरसप्रीत्या खादन् नरास्थि निरामिषम् ।
सुरपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते
न हि गणयति क्षुद्रो जन्तुःपरिग्रहफलफल्गुताम्॥३३

स्वल्पं स्नायुवशावशेषमलिनं निर्मांसमप्यस्थिकं
श्वा लब्ध्वा,परितोषमेति न च तत्तस्य क्षुधाशान्तये ।
सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपंफलम्॥

पापान्निवारयति योजयते हिताय
गुह्यानि गूहति गुणान् प्रकटी करोति ।
आपद्गतञ्च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥३५॥

मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम्।
लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥३६॥

सन्तप्तायसि संस्थितस्य पयसोनामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रे स्थितं राजते
स्वात्यां सागरशुक्तिमध्यपतितं मुक्ताफलं जायते
प्रायेणाधममध्यमोत्तमगुणः संसर्गतोजायते ॥३७॥

ब्रह्मा येन कुलालवन्नियमितोब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तोमहासङ्कटे।
रुद्रो येन कपालपाणिपुटके भिक्षाटनङ्कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे॥३८

कुसुमस्तवकस्येव द्वे वृत्ती तु मनस्विनः।
सर्वलोकस्य वा मूर्ध्नि विशीर्य्येत वनेथवा ॥३९॥

मौनान्मूकः प्रवचनपटुर्वातुलोजल्पकोवा
क्षान्त्या भीरुर्यदि न सहते प्रायसो नाभिजातः।
धृष्टः पार्श्वे स भवति जनो दूरतश्चाप्रगल्भः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥४०॥

नम्रत्वेनोन्नमन्तः परगुणनुतिभिःस्वागुणान्ख्यापयन्तः
स्वार्थान् सम्पादयन्तोविततपृथुतरारम्भयन्तः परार्थे।
क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्मुखान्दूषयन्तः
सन्तःसाश्चर्यचर्याजगतिवहुमताः कस्य नाभ्यर्थनीयाः

लोभश्चास्ति गुणेन किं पिशुनता यद्यस्ति किम्पातकैः
सत्यञ्चेत्तपसा च कि शुचिमना यद्यस्ति तीर्थेनकिम्।

सौजन्यं यदि किन्निजैः सुमहिमा यद्यस्ति किम्मण्डनै
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना॥४२॥

अम्भोजिनीवननिवासविलासमेव
हंसस्य हन्ति नितरां कुपितो विधाता ।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां
वैदग्ध्यकीर्त्तिमपहर्त्तुमसौ समर्थः ॥४३॥

खल्वाटो दिवसेश्वरस्य किरणैः सन्तापिते मस्तके
वाञ्छन्देशमनातपं विधिवशात्तालस्य मूलङ्गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः॥४४

नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा किल सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥४५॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥४६॥

एते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे॥४७॥

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्त्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥ ४८॥
वाञ्छा सज्जनसङ्गमे गुणिगणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् ।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले
एते यत्र वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ ४९॥
अग्राह्यं हृदयन्तथैव वदनं यद्दर्पणान्तर्गतं
भावः पर्वतसूक्ष्ममार्गविषमः स्त्रीणान्न विज्ञायते ।
चित्तं पुष्करपत्रतोयतरलं विद्वद्भिराशंसितं
नारीनामविषाङ्कुरैरिव लतादोषैः समं वर्द्धिता ॥ ५०॥
तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् ।
मान्यान्मानय विद्विषोऽप्यनुनय प्रच्छादय स्वान् गुणान्
कीर्त्तिं पालय दुःखिते कुरु दयामेतत्सताञ्चेष्टितम् ॥
गुणवदगुणवद्वा कुर्वता कार्य्यजातं
परिणतिरवधार्य्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्तेर्
भवति हृदयदाही शल्यतुल्यो विपाकः ।
एको देवः केशवो वा शिवो वा
एकं मित्रं भूपतिर्वा यतिर्वा ।

एको वासः पत्तने वा वने वा
एका भार्या सुन्दरी वा दरी वा ॥ ५३ ॥

वने रणे शत्रुजलाग्निमध्ये
महार्णवे पर्वतमस्तके वा ।
सुप्तं प्रमत्तं विषमस्थितं वा
रक्षन्ति पुण्यानि पुरा कृतानि ॥ ५४ ॥

भीमं वनम्भवति तस्य पुरं प्रधानं
सर्वो जनः सुजनतामुपयाति तस्य ।
कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा
यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ ५५ ॥

यन्नागा मदभिन्नगण्डकरटास्तिष्ठन्ति निद्रालसा
द्वारे हेमविभूषणास्तुरगा वल्गन्ति यद्दर्पिताः ।
वीणावेणुमृदङ्गशङ्खपटहैः सुप्तस्तु यद् बोध्यते
तत्सर्वं सुरलोकदेवसदृशं धर्मस्य विस्फूर्जितम् ॥ ५६ ॥

मज्जत्वम्भसि यातु मेरुशिखरं शत्रुञ्जयत्वाहवे
वाणिज्यं कृषिसेवनादिसकला विद्याःकलाः शिक्षतु ।
आकाशं विपुलं प्रयातु खगवत्कृत्वा प्रयत्नम्परं
नाभाव्यम्भवतीह कर्मवशतो भाव्यस्य नाशःकुतः ॥ ५७

वरं पक्षच्छेदः समदमघवन्मुक्तकुलिश
प्रहारैरुद्गच्छद्बहुलदहनोद्गारगुरुभिः ।
तुषाराद्रेः सूनोरहह पितरिक्लेशविवशे
न चासौ सम्पातः पयसि पयसां पत्युरुचितः ॥ ५८ ॥

नेता यत्र बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावतो वाहनम्।
इत्यैश्वर्यसमन्वितोपि बलभिद्भग्नः परैः सङ्गरे
तद्युक्तं ननु दैवमेवशरणं धिग्धिग् वृथा पौरुषम्॥५९

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणीम्।
तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता॥६०॥

आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः।
नास्त्युद्यमसमो बन्धुः कृत्वा यन्नावसीदति॥६१॥

वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह।
न मूर्खजनसंसर्गः सुरेन्द्रभवनेष्वपि॥६२॥

दानंभोगो नाशस्तिस्रो गतयोभवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति॥६३

यस्यास्ति वित्तं स नरः कुलीनः
स एव वक्ता सच दर्शनीयः।
स पण्डितः स श्रुतवान् गुणज्ञः
सर्वे गुणाः काञ्चनमाश्रयन्ति॥६४॥

रत्नैर्महार्हैस्तुतुषुर्न देवा
न भेजिरे भीमविषेण भीतिम्।
सुधाम्बिना न प्रययुर्विरामं
विनिश्चितार्थाद्विरमन्ति धीराः॥६५॥

सन्त्यन्येपि बृहस्पतिप्रभृतयः सम्भाविताः पञ्चषा
स्तान् प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते।

द्वावेव ग्रसते दिनेश्वरनिशाप्राणेश्वरौ भास्वतौ
भ्रातः पर्वणि पश्य दानवपतिः शीर्षावशेषीकृतः ॥६६॥
इत्यत्येतस्मिन् वा निरवधिचमत्कृत्यतिशये
वराहो वा राज्ञः प्रभवति चमत्कारविषयः ।
महीमेको मग्नां यदयमवहद्दन्तसलिलैः
शिरःशेषः शत्रुर्निगिलति परं सन्त्यजति च ॥६७॥
श्रोत्रं श्रुतेनैव न कुण्डलेन
दानेन पाणिर्न च कङ्कणेन ।
आभाति कायः करुणापराणां
परोपकारेण न चन्दनेन ॥६८॥
जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥६९॥
यद्धाता निजभालपट्टलिखितं स्तोकं महद्वा फलं
तत्प्राप्नोति मरुस्थलेऽपि नियतं मेरौ च नातोऽधिकम् ।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥
लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनञ्च ।
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥७१॥
राजन् दुधुक्षसि यदि क्षितिधेनुमेतां
तेनाद्य वत्समिव लोकममुं पुषाण ॥

तस्मिंश्च सम्यगनिशम्परिपोष्यमाने
नानाफलैः फलति कल्पलतेव भूमिः ॥७२॥
सत्यानृता च परुषा प्रियवादिनी च
हिंसा दयालुरपि चार्थपरा वदान्या।
नित्यव्यया प्रचुरनित्यधनागमा च
वाराङ्गनेव नृपनीतिरनेकरूपा ॥७३॥
न कश्चिच्चण्डकोपानामात्मीयोनाम भूभुजां
होतारमपि जुह्वन्तं स्पृष्टो दहति पावकः ॥७४॥
विपदि महतान्धैर्यध्वंसं यदीचितु मीहसे
विरम विरसायासाद्दुराध्यवसायतः।
अपि जडविधेः कल्पापाये व्यपेत निजक्रमः
कुलशिखरिणः क्षुद्रा नैते न वा जलाशयः ॥७५॥
अकरुणत्वमकारणविग्रहः
परधनाय रतिः परयोषिति।
सुजनबन्धुजनेष्वसहिष्णुता
प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥७६॥
कान्ताकटाक्षविशिखा न खनन्ति यस्य
चित्तं न निर्दहति कोपकृशानुतापः।
कर्षन्ति भूरिविषयाश्च न लोभपाशा
लोकत्रयं जयति कृत्स्नमिदं स वीरः ॥७७॥
आरम्भगुर्वीक्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमती च पश्चात्।

दिनस्य पूर्वार्द्धपरार्द्धभिन्ना
छायेव मैत्री खलु सज्जनानाम्॥ ७८॥

प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनञ्चाप्युपकृतेः।
अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम्॥ ७९॥

छिन्नोपि रोहति तरुः क्षीणोप्युपचीयते पुनश्चन्द्रः।
इति विमृशन्तः सन्तः सन्तप्यन्ते न ते विपदा॥८०॥

भवन्ति नम्रास्तरवः फलोद्गमैर्
नवाम्बुभिर्भूमिविलम्बिनोघनाः।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभावएवैष परोपकारिणाम्॥ ८१॥

कदर्थितस्यापि हि धैर्य्यवृत्तेर्
बुद्धेर्विनाशो न हि शङ्कनीयः।
अधःकृतस्यापि तनूनपातो
नाधःशिखा याति कदाचिदेव॥८२॥

अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः।
परपरिवादनिवृत्तैः क्वचित्क्वचिन्मण्डिता वसुधा॥ ८

पद्माकरन्दिनकरोविकचीकरोति
चन्द्रोविकाशयति कैरवचक्रवालम्।
नाभ्यर्थितोपि जलदः सलिलन्ददाति
सन्तः स्वयं परहितेषु कृताभियोगाः॥८४॥

एकेनापि हि शूरेण पादाक्रान्तं महीतलम्।
क्रियते भास्करेणैव स्फारं स्फुरिततेजसा॥८५॥

वरं तुङ्गात् शृङ्गाद्गुरुशिखरिणः क्वापि पुलिने
पतित्वायं कायः कठिनदृषदन्तर्विदलितः।
वरं न्यस्तो हस्तः फणिपतिमुखे तीव्रदशने
वरं वह्नौ पातस्तदपि न कृतः शीलविलयः॥८६॥

वह्निस्तस्य जलायते जलनिधिः कूपायते तत्क्षणात्
मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते
यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति॥८७॥

यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरतिकान्तः
तत्तेजस्वी पुरुषः परकृतनिकृतिं कथं सहते॥८८॥

आज्ञा कीर्तिः पालनं ब्राह्मणानां
दानम्भोगो मित्रसंरक्षणञ्च।
येषामेते षड्गुणा न प्रवृत्ताः
कोऽर्थस्तेषां पार्थिवोपाश्रयेण॥८९॥

व्यालम्बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भितं
छेत्तुम्वज्रमणिं शिरीषकुसुमप्रान्तेन सन्नह्यति।
माधुर्यं मधुविन्दुना रचयितुं क्षाराम्बुधेरीहते
नेतुम्वाञ्छति यः सतां पथि खलान् सूक्तैः सुधास्यन्दिभिः॥९०॥

स्वायत्तमेकान्तहितं विधात्रा
विनिर्मितं छादनमज्ञतायाः।

विशेषतः सर्वविदां समाजे
विभूषणं मौनमपण्डितानाम् ॥ ८१॥

उद्भासिताखिलखलस्य विशृङ्खलस्य
प्राग्जातविस्मृतनिजाधमकर्मवृत्तेः ।
दैवादवाप्तविभवस्य गुणद्विषोऽस्य
नीचस्य गोचरगतैः सुखमास्यते कैः ॥ ८२॥

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तन्धनं
विद्या भोगकरी यशः सुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या परन्दैवतं
विद्या राजसु पूजिता शुचि धनं विद्याविहीनः पशुः ॥

दाक्षिण्यं स्वजने दया परिजने शाठ्यं सदा दुर्जने
प्रीतिः साधुजने क्षमा गुरुजने नारीजने धूर्तता ।
शौर्यं शत्रुजने क्षमा खलजने विद्वज्जने चार्जवं
ये त्वेवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितः ॥ ८४॥

करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजयभुजयोर्वीर्य्यमतुलम् ।
हृदि स्वच्छा वृत्तिः श्रुतमधिगतञ्च श्रवणयोर्
विनाप्यैश्वर्य्येण प्रकृतिमहतां मण्डनमिदम् ॥ ८५॥

वहति भुवनश्रेणीं फणी फणाफलकस्थितां
कमठपतिना मध्येपृष्ठं सदा स च धार्य्यते ।
तमपि कुरुते क्रोडाधीनं पयोनिधिरनादराद्
अहह महतां निःसीमानश्चरितविभूतयः ॥ ८६॥

स्पृहयति भुजयोरन्तरमायतकरवालकर ।
करुदीर्णं विजयश्रीर्वीराणां मत्तप्रौढ़वनितेव ॥९७॥
स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्तिनि संसारे मृतः को वा न जायते ॥९८॥
लज्जां गुणौघजननीं जननीमिव स्वाम्
अत्यन्तशुद्धहृदयामनुवर्त्तमानाः ।
तेजस्विनः सुखमसूनपि सन्त्यजन्ति
सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥९९॥
सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु ।
प्रकृतिरियं सत्ववतां न खलु वयस्तेजसो हेतुः॥१००॥
किङ्कूर्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनपतेरस्तेन यन्निश्चलः ।
किन्त्वङ्गीकृतमुत्सृजन्न मनसा श्लाघ्यो जनो लज्जते
निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥१०१
दूरादर्थं घटयति नवन्दूरतश्चापशब्दं
त्यक्ता भूयो भवति नियतं सत्सभारञ्जनेषु ।
मन्दंमन्दं रचयति पदं लोकचित्तानुवृत्त्या
कामं मन्त्री कविरिव सदा खेदभारैरमुक्तः ॥१०२॥
दैवेन प्रभुणा स्वयञ्जगति यद्यस्य प्रमाणीकृतं
तत्तस्योपनयेन्मनागपि महान्नैवाश्रयः कारणम् ।
सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं
सूक्ष्माएव पतन्ति चातकमुखे द्वित्राः पयोविन्दवः॥१०।

अभिमुखनिहतस्य सतस्तिष्ठतु तावज्जयो यथा स्वर्गः।
उभयबलसाधुवादः श्रवणसुखस्यैव तात्पर्यम् ॥१०४॥

को न याति वशं लोके मुखे पिण्डेन पूरितः।
मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥१०५॥

केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला
न स्नानं न विलेपनं सुकुसुमं नालंकृता मूर्द्धजाः।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणम्भूषणम्॥१०६

यदि नाम दैवगत्या जगदसरोजं कदाचिदपि जातम्।
अवकरनिकरं विकिरति तत्किं कृकवाकुरिव हंसः॥

परिचरितव्याः सन्तो यद्यपि कथयन्ति न सदुपदेशम्
यास्तेषां स्वैरं कथास्ता एव भवन्ति शास्त्राणि॥१०८॥

कमठकुलाचलदिग्गजफणिपति-
विधृतापि चलति वसुधेयम्।
प्रतिपन्नममलमनसां न चलति
पुंसां युगान्तेपि ॥१०९॥

इति श्रीभर्तृहरिविरचितं नीतिशतकं समाप्तम्।

---

## वैराग्यशतकम् ।

चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभासुरो
लीलादग्धविलोलकामशलभः श्रेयोदशाग्रे स्फुरन् ।
अन्तःस्फुर्जदपारमोहतिमिरप्राग्भारमुच्चाटयन्
चेतः सद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः ॥१॥

### तृष्णादूषणम् ।

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ।
अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥२॥

न संसारोत्पन्नं चरितमनुपश्यामि कुशलं
विपाकः पुण्यानां जनयति भयं मे विमृशतः ।
महद्भिः पुण्यौघैश्चिरमपि गृहीताश्च विषया
महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥३॥

भ्रान्तन्देशमनेकदुर्गविषमं प्राप्तं न किञ्चित्फलं
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला ।
भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकवत्
तृष्णे जृम्भसि पापकर्मपिशुने नाद्यापि सन्तुष्यसि ॥४॥

उत्खातन्निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णस्सरिताम्पतिर्नृपतयो यत्नेन सन्तोषिताः ।
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः

प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥
खलोल्लापाः सोढाः कथमपि तदाराधनपरैर्
निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा।
कृतश्चित्तस्तम्भः प्रतिहतधियामञ्जलिरपि
त्वमाशे मोघाशे किमु परमतो नर्तयसि माम् ॥६॥
अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
कृते किन्नास्माभिर्विगलितविवेकैर्व्यवसितम्।
यदाढ्यानामग्रे द्रविणमदनिःसंज्ञमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥७॥
भोगा न भुक्ता वयमेव भुक्तास्तपो न तप्तं वयमेव तप्ताः।
कालो न यातो वयमेव यातास्तृष्णा न जीर्णा वयमेव जीर्णाः॥
वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥८॥
निवृत्ता भोगेच्छा पुरुषबहुमानोऽपि गलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः।
शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने
अहो दुष्टः कायस्तदपि मरणोपायचकितः ॥१०॥
आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी।
मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः॥

विषयपरित्यागविडम्बना ॥

अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयन्त्यक्तास्त्वेते शमसुखमनन्तं विदधति ॥१२॥
ब्रह्म ज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निस्पृहाः ।
सम्प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो
वाञ्छामात्रपरिग्रहाण्यपि परित्यक्तुन्न शक्तावयम् ॥१३
धन्यानां गिरिकन्दरेषु वसतां ज्योतिः परं ध्यायताम
आनन्दाश्रुकणान्पिबन्ति शकुना निःशङ्कमङ्केशयाः ।
अस्माकं तु मनोरथोपरचितप्रासादवापीतट
क्रीडाकाननकेलिकौतुकजुषामायुः परं चीयते ॥१४॥
स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ
मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् ।
स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्द्धि जघनं
मुहुर्निन्द्यं रूपं कविवरविशेषैर्गुरु कृतम् ॥१५॥
भिक्षाशनं तदपि नीरसमेकवारं
शय्या च भूः परिजनो निजदेहमात्रम् ।
वस्त्रं च जीर्णशतखण्डमलीनकन्था
हाहा तथापि विषयान्न परित्यजन्ति ॥१६॥

अजानन्माहात्म्यम्पतति शलभस्तीव्रदहने
समीनोप्यज्ञानाद्बडिशयुतमश्नाति पिशितम् ।
विजानन्तोप्येते वयमिह विपज्जालपटलान्
न मुञ्चामः कामानहह गहनो मोहमहिमा ॥१७॥
तुङ्गं वेश्म सुताः सतामभिमताः संख्यातिगाः सम्पदः
कल्याणी दयिता वयश्च नवमित्यज्ञानमूढो जनः ।
मत्वा विश्वमनश्वरन्निविशते संसारकारागृहे
संदृश्य क्षणभङ्गुरं तदखिलं धन्यस्तु संन्यस्यति ॥१८॥

याच्ञादैन्यदूषणम् ।

दीनादीनमुखैः सकीयशिशुकैराकृष्टजीर्णाम्बरां
क्रोशद्भिः क्षुधितैर्निरन्नजठरां दृश्येत चेद्गेहिनीम् ।
याच्ञाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं
कोदेहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी पुमान् ॥
अभिमतमहामानग्रन्थिप्रभेदपटीयसी
गुरुतरगुणग्रामाम्भोजस्फुटोज्ज्वलचन्द्रिका ।
विपुलविलसल्लज्जावल्लीविदारकुठारिका
जठरपिठरी दुष्पूरेयं करोति बिडम्बनाम् ॥२०॥
पुण्यग्रामे वने वा महति सितपटच्छन्नपालीकपालीम्
आदाय न्यायगर्भं द्विजहुतहुतभुग्धूमधूम्रोपकण्ठम् ।
द्वारं द्वारं प्रविष्टो वरमुदरदरीपूरणाय क्षुधार्त्तो
मानीप्राणीसनाथो नपुनरनुदिनं तुल्यकुल्येषुदीनः ॥

गङ्गातरङ्गकणशीकरशीतलानि
विद्याधराध्युषितचारुशिलातलानि ।
स्थानानि किं हिमवतः प्रलयं गतानि
यत्सापमानपरपिण्डरता मनुष्याः ॥२०॥

किं कन्दाःकन्दरेभ्यःप्रलयमुपगतानिर्झरावा गिरिभ्यः
प्रध्वस्ताःकिंमहीजाःसरसफलभृतोवल्कलिन्यश्चशाखाः
वीक्ष्यन्ते किं मुखानि प्रसभमपगतप्रश्रयाणां खलानां
दुःखोपात्ताल्पवित्तस्मयपवनवशान्नर्तितभ्रूलतानि॥२३

पुण्यैर्मूलफलप्रियप्रणयिनीं प्रीतिं कुरुष्वाधुना
भूशय्या नवपल्लवैरकृपणैरुत्तिष्ठ यामो वनम् ।
क्षुद्राणामविवेकमूढमनसा तत्रेश्वराणां सदा
वित्तव्याधिविकारविह्वलगिरां नामापि न श्रूयते॥२४

फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् ।
मृदुस्पर्शा शय्या सुललितलता पल्लवमयी
सहन्ते सन्तापं तदपि धनिनां द्वारि कृपणाः ॥२५॥

ये वर्द्धन्ते धनपतिपुरःप्रार्थनादुःखभाजो
ये चाल्पत्वं दधति विषयाक्षेपपर्यस्तबुद्धेः ।
तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं
ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः ॥२६॥

भिक्षाहारमदैन्यमप्रतिहतं भीतिच्छिदं सर्वदा
दुर्मात्सर्यमदाभिमानमथनं दुःखौघविध्वंसनम् ।

सर्वत्रान्वहमप्रयत्नसुलभं साधुप्रियं पावनं
शम्भोः सत्रमवार्यमक्षयनिधिं शंसन्ति योगीश्वराः॥ २

भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं
माने दैन्यभयं बले रिपुभयं रूपे तरुण्याभयम् ।
शास्त्रे वादिभयं गुणे खलभयं काये कृतान्ताद्भयं
सर्व्वं वस्तु भयान्वितं भुविनृणां वैराग्यमेवाभयम्॥ २८

आक्रान्तं मरणेन जन्मजरसा जात्युत्तमं यौवनं
सन्तोषोधनलिप्सया शमसुखं प्रौढ़ाङ्गनाविभ्रमैः ।
लोकैर्मत्सरिभिर्गुणावनभुवोव्यालैर्नृपादुर्जनैर्
अस्थैर्येण विभूतयोप्युपहता ग्रस्तं न किङ्केन वा ॥ २९॥

आधिव्याधिशतैर्जनस्य विविधरारोग्यमुन्मूल्यते
लक्ष्मीर्यत्र पतन्ति तत्र विद्दतद्वाराइव आपदः ।
जातं जातमवश्यमाशु विवशं मृत्युः करोत्यात्मसात्
तत्किङ्केन निरङ्कुशेन विधिना यन्निर्मितं सुस्थिरम् ॥

भोगास्तुङ्गतरङ्गतुल्यतरलाः प्राणाः क्षणध्वंसिनः
स्तोकान्येव दिनानि यौवनसुखं स्फूर्तिः क्रियासुस्थिता
तत्संसारमसारमेव निखिलं बुध्वा बुधा बोधका
लोकानुग्रहपेशलेन मनसा यत्नः समाधीयताम् ॥ ३॥

भोगा तोयवितानमध्यविलसत्सौदामिनीचञ्चला
आयुर्वायुविवर्त्तिताभ्रपटलीच्छिन्नाम्बुवद्भङ्गरम् ।
लीला यौवनलालसास्तनुभृतामित्याकलय्य द्रुतं
योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विधद्ध बुधाः॥ ३२

आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्रीर्
अर्थाः सङ्कल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूगाः
कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः प्रणीतं
ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरन्तः ॥

कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भवासे
कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने चोपभोगः
वामाक्षीणामवज्ञाविहसितवसतिर्वृद्धभावोऽप्यसाधुः
संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किञ्चित्
व्याघ्रीव तिष्ठति जरा परितर्जयन्ती ॥३४॥
रोगाश्च शत्रव इव प्रहरन्ति देहे ।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाप्यहितमाचरतीति चित्रम् ॥३५॥
भोगा भङ्गुरवृत्तयो बहुविधास्तैरेव चायं भवस्
तत्कस्येह कृते परिभ्रमत हे लोकाः कृतं चेष्टितम् ।
आशापाशशतोपशान्तिविशदं चेतः समाधीयतां
काम्योत्पत्तिवशे स्वधामनि यदि श्रद्धेयमस्मद्वचः॥३६॥
ब्रह्मेन्द्रादिमरुद्गणांस्तृणगणान् यत्र स्थितो मन्यते
यत्स्वादाद्विरसा भवन्ति विभवास्त्रैलोक्यराज्यादयः ।
बोधः कोऽपि स एक एव परमो नित्योदिते जृम्भते
भोः साधो क्षणभङ्गुरे तदितरे भोगे रतिं मा कृथाः॥

कालमहिमा ॥

सा रम्या नगरी महान् स नृपतिः सामन्तचक्रञ्च तत्

पार्श्वे तस्य च सा विदग्धपरिषत्ताश्चन्द्रविम्बाननाः ।
उन्मत्तः स च राजपुत्रनिवहस्ते वन्दितस्ताः कथाः
सर्वं यस्य वशादगात् स्मृतिपथं कालाय तस्मै नमः॥३८

यत्रानेकः क्वचिदपि च गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते ।
इत्यञ्चेमौ रजनिदिवसौ दोलयन् द्वाविवाक्षौ
कालः काल्या भुवनफलके क्रीडति प्राणिसारैः ॥३९

आदित्यस्य गतागतैरहरहः संक्षीयते जीवनं
व्यापारैर्बहुकार्य्यभारगुरुभिः कालो न विज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत ॥४०॥

रात्रिः सैव पुनः स एव दिवसो मत्वा मुधा जन्तवो
धावन्त्युद्यमिनस्तथैव निभृतं प्रारब्धतत्तत्क्रियाः ।
व्यापारैः पुनरुक्तभूतविषयैरित्थं विधेनामुना
संसारेण कदर्थिता वयमहो मोहं न जानीमहे॥४१॥

न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये
स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥४२॥

नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भपीठदमनैर्नाकं न नीतं यशः ।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये

तारुण्यङ्गतमेव निष्फलमहो शून्यालये दीपवत् ॥४३॥
विद्या नाधिगता कलङ्करहिता वित्तं च नोपार्जितम् ।
शुश्रूषापि समाहितेन मनसा पित्रोर्नसम्पादिता ॥४४॥
आलोलायतलोचनायुवतयः स्वप्नेपि नालिङ्गिताः ।
कालोयं परपिण्डलोलुपतया काकैरिव प्रेषितः ॥४५॥
वयं येभ्यो जाताश्चिरपरिगताएव खलु ते
समायेषां वृद्धाः स्मृतिविषयतां तेपि गमिताः ।
इदानीमेते स्मःप्रतिदिवससमापन्नपतना
गता तुल्यावस्थां सिकतिनिनदीतीरतरुभिः ॥४६॥
आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्द्धं गतं
तस्यार्द्धस्य परस्य चार्द्धमपरं बालत्ववृद्धत्वयोः ।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ॥
क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः ।
जराजीर्णैरङ्गैर्नटइव वलीमण्डिततनुः
नरः संसारान्ते विशति यमधानीयवनिकाम् ॥४८॥

यतिनृपतिसम्वादः ॥

त्वं राजा वयमप्युपासितगुरुः प्रज्ञाभिमानोन्नताः
ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति च ।
इत्थं मानधनातिदूरमुभयोरप्यावयोरन्तरं
यद्यस्मासु पराङ्मुखोसि वयमप्येकान्ततोनिस्पृहाः ॥

अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
क्वचित्पुण्येऽरण्ये शिवशिवशिवेति प्रलपतः ॥५०॥

एकाकी निस्पृहः शान्तः पाणिपात्रोदिगम्बरः ।
कदा शम्भो भविष्यामि कर्मनिर्मूलनक्षमः ॥५१॥

पाणिं पात्रयतां निसर्गशुचिना भैक्षेण सन्तुष्यतां
यत्र क्वापि निषीदतां बहुतृणं विश्वं मुहुः पश्यताम् ।
अत्यागेऽपि तनोरखण्डपरमानन्दावबोधस्पृहां
मर्त्यः कोऽपि शिवप्रसादसुलभां सम्पत्स्यते योगिनाम् ॥

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदर्थं
शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं ते
सेवन्ते त्वां धनाढ्यामतिमलहतये मामपि श्रोतुकामा
मय्यप्यास्था न ते चेत्त्वयि मम नितरामेवराजन् गतासो
वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः ॥५३॥

समइह परितोषो निर्विशेषो विशेषः ।
सतु भवतु दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोर्थवान् को दरिद्रः ॥५४॥

फलमलमशनाय स्वादु पानाय तोयं
शयनमवनीपृष्ठे वाससी वल्कले च ।
धनलवमधुपानभ्रान्तसर्वेन्द्रियाणाम्
अवनयमनुमन्तुं नोत्सहे दुर्जनानाम् ।

अश्नीमहि वयं भिक्षामाशावासो वसीमहि।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः॥५६॥
न नटा न विटा न गायका नच सभ्येतरवादिचञ्चवः
नृप संसदि तेन के वयं स्तनभारानमिता न योषितः॥
विपुलहृदयैरीशैः कैश्चिज्जगज्जनितं पुरा
विधृममपरैर्दत्तं चान्यैर्विजित्य तृणं यथा।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः॥५८॥
अभुक्तायां यस्यां क्षणमपि न यातं नृपशतैर्
भुवस्तस्या लाभे क इह बहुमानः क्षितिभृताम्।
तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो
विषादे कर्त्तव्ये विदधति जडाः प्रत्युतमुदम्॥५९॥
परेषां चेतांसि प्रतिदिवसमाराध्य बहुधा
प्रसादं किन्नेतुं विशसि हृदयक्लेशविफलम्।
प्रसन्ने त्वय्यन्तः स्वयमुदितचिन्तामणिगुणे
विविक्ते सङ्कल्पे किमभिलषितं पुष्यति न ते॥६०॥
परिभ्रमसि किं वृथा क्वच न चित्त विश्राम्यतां
स्वयम्भवति यद्यथा भवति नान्यथा तत्तथा।
अतीतमपि न स्मरन्नपि च भाव्यं सङ्कल्पयन्
न तर्कितगमागमाननुभवस्व भोगानिह॥६१॥
एतस्माद्विरमेन्द्रियार्थगहनादायासकादाश्रयात्
श्रेयोमार्गमशेषदुःखशमनव्यापारदक्षं क्षणात्।

आत्मीभावमुपैहि सन्त्यज निजां कल्लोललोलां मतिं
मा भूयो भज भङ्गुरांभवरतिं चेतः प्रसीदाधुना॥६२॥

मोहं मार्जय तामुपार्जय रतिं चन्द्रार्द्धचूडामणौ
चेतः स्वर्गतरङ्गिणीतटभुवि व्यासङ्गमङ्गी कुरु।
कोवा वीचिषु बुद्बुदेषु च तडिल्लेखासु च श्रीषु च
ज्वालाग्रेषु च पन्नगेषु च सरिद्वेगेषु च प्रत्ययः॥६३॥

चेतश्चिन्तय मा रमां सकृदिमामस्थायिनीमास्थया
भूपालभ्रुकुटीकुटीरविहरव्यापारपण्याङ्गनाम्।
कन्थाकञ्चुकितः प्रविश्य भवनद्वाराणि वाराणसी
रथ्यापंक्तिषु पाणिपात्रपतितां भिक्षामपेक्षामहे॥६४॥

अग्रे गीतं सरसकवयः पार्श्वयो दाक्षिणात्याः
पश्चाल्लीलावलयरणितं चामरग्राहिणीनाम्।
यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं
नोचेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ॥६५॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
न्यस्तं पदं शिरसि विद्विषतां ततः किम्।
सम्पादिताः प्रणयिनोविभवैस्ततः किं
कल्पस्थितास्तनुभृतस्तनवस्ततः किम्॥६६॥

भक्तिर्भवे मरणजन्मभयं हृदिस्थं
स्नेहोन बन्धुषु च मन्मथजा विकाराः।
संसर्गदोषरहिताविजना वनान्ता
वैराग्यमस्ति किमतः परमर्थनीयम॥६७॥

तस्मादनन्तमजरं परमाविकासि
तद्ब्रह्म चिन्तय किमेभिरसद्विकल्पैः ।
यस्यानुषङ्गिण इमे भुवनाधिपत्य
भोगादयः कृपणलोकमता भवन्ति ॥६८॥

पातालमाविशसि यासि नभो विलङ्घ्य
दिङ्मण्डलं भ्रमसि मानस चापलेन ।
भ्रान्त्यापि जातु विमलं कथमात्मलीनं
न ब्रह्म संस्मरसि निर्वृतिमेषि येन ॥६९॥

नित्यानित्यविचारः ॥

किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः
स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ।
मुक्त्वैकं भवदुःखभाररचनाविध्वंसकालानलं
स्वात्मानन्दपदप्रवेशकलनं शेषा वणिग्वृत्तयः ॥७०॥

गात्रं सङ्कुचितं गतिर्विगलिता भ्रष्टा च दन्तावली
दृष्टिर्नश्यति वर्द्धते बधिरता वक्त्रं च लालायते ।
वाक्यं नाद्रियते च बान्धवजनो भार्या न शुश्रूषते
हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥७१॥

वर्णं सितं समवलोक्य शिरोरुहाणां
स्थानं जरापरिभवस्य तदेव पुंसाम् ।
आरोपितास्थिशकलं परिहृत्य यान्ति
चाण्डालकूपमिव दूरतरं तरुण्यः ॥७२॥

यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयोनायुषः।
आत्मश्रेयसि तावदेव विदुषा कार्य्यः प्रयत्नोमहान्
सन्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥७३॥
तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं
गुणोदारान्दारानुत परिचरामः सविषयान्।
पिवामः शास्त्रौघानुत विविधकाव्यामृतरसान्
न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥७४॥
दुराराध्यः स्वामी तुरगचलचित्ताः क्षितिभुजो
वयन्तु स्थूलेच्छाः सुमहति पदे बद्धमनसः।
जरादेहे मृत्युर्हरति दयितं जीवितमिदं
सखे नान्यच्छ्रेयोजगति विदुषामन्न तपसः ॥७५॥
रम्यं हर्म्यतलं न किं वसतये श्राव्यं नगेयादिकं
किंवा प्राणसमासमागमसुखं नैवाधिकं प्रीतये।
किन्तु भ्रान्तपतङ्गपक्षपवनव्यालोलदीपाङ्कुर
छायाचञ्चलमाकलय्य सततं सन्तो वनान्तङ्गताः॥७६

## शिवार्चनपद्धतिः॥

आसंसारं त्रिभुवनमिदं चिन्वतां तात ताडङ्
नैवास्माकं नयनपदवीं श्रोत्रमार्गं गतोवा।
योयं धत्ते विषयकरिणीगाढगूढाभिमानः
क्षीवस्यान्तःकरणकरिणः संयमालानलीलाम ॥७७॥

जीर्णाएव मनोरथाश्च हृदये यातं च तद्यौवनं
हन्ताङ्गेषु गुणाश्च वन्ध्यफलतां याता गुणज्ञैर्विना ।
किं युक्तं सहसाभ्युपैति बलवान् कालः कृतान्तोऽक्षमी
ह्यज्ञातं मदनान्तकांघ्रियुगलं मुक्त्वास्ति नान्या गतिः ॥

महेश्वरे वा जगतामधीश्वरे
जनार्दने वा जगदन्तरात्मनि ।
न वस्तुतो मे प्रतिपत्तिरस्ति
तथापि भक्तिस्तरुणेन्दुशेखरे ॥७९॥

स्फुरत्स्फारज्योत्स्नाधवलिततले क्वापि पुलिने
सुखासीनाः शान्तध्वनिषु रजनीषु द्युसरितः ।
भवाभोगोभग्नाः शिवशिवशिवेत्युच्चवचसः
कदा यास्यामोऽन्तर्गतबहुलबाष्पाकुलदृशः ॥८०॥

वितीर्णे सर्वस्वे तरुणकरुणापूर्णहृदयास्
तरन्तः संसारं विरसपरिणामावधिगतम् ।
कदा पुण्यारण्ये परिगतशरच्चन्द्रकिरणास्
त्रियामा नेष्यामो हरचरणचित्तैकशरणाः ॥८१॥

कदा वाराणस्याममरतटिनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।
अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥८२॥

स्नात्वा गाङ्गैः पयोभिः शुचिकुसुमफलैरर्चयित्वा विभो त्वां
ध्येये ध्यानं निवेश्य क्षितिधरकुहरग्रावशय्यानिषस्तः ।

आत्मारामः फलाशी गुरुवचनरतस्त्वत्प्रसादात्स्मरारे
दुःखं मोक्ष्ये कदाहं समकरचरणे पुंसि सेवासमुत्थम् ॥
मही शय्या शय्या विपुलमुपधानं भुजलता
वितानं चाकाशं व्यजनमनुकूलोयमनिलः ।
स्फुरद्दीपश्चन्द्रो विरतिवनितासङ्गमुदितः
सुखं शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥ ८४ ॥

अवधूतचर्य्या ॥

कौपीनं शतखण्डजर्जरतरं कन्था पुनस्तादृशी
नैश्चिन्त्यं निरपेक्ष्य भैक्षमशनं निद्रा श्मशाने वने
स्वातन्त्र्येण निरङ्कुशं विहरणं स्वान्तं प्रशान्तं सदा
स्थैर्य्यं योगमहोत्सवेपि च यदि त्रैलोक्यराज्येनकिम् ॥
भूः पर्य्यंको निजभुजलता कन्दुकः खं वितानम्
दीपश्चन्द्रोविरतिवनितालब्धसङ्गप्रमोदः ।
दिक्कान्ताभिः पवनचमरैर्वीज्यमानः समन्तात्
भिक्षुः शेते नृप इव भुवि त्यक्तसर्वस्पृहोपि ॥ ८६ ॥
ब्रह्माण्डो मण्डलीमात्रं को लोभाय मनस्विनः ।
शफरीस्फुरितेनाब्धेः क्षुब्धता जातु जायते ॥ ८७ ॥
यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदिति ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ ८८ ॥

रम्याश्चन्द्रमरीचयस्तृणवती रम्या वनान्तस्थली
रम्यं साधुसमासमागमसुखं काव्येषु रम्याः कथाः ।
कोपोपाहितवाष्पबिन्दुतरलं रम्यं प्रियाया मुखं
सर्वं रम्यमनित्यतामधिगतं चित्ते न किञ्चित्तु न ॥८६

भिक्षाशी जनमध्यसङ्गरहितः स्वायत्तचेष्टः सदा
हानादानविभिन्नवर्गरहितः कश्चित्तपस्वी स्थितः ।
रथ्याकीर्णविशीर्णजीर्णवसनैरास्यूतकन्थाधरो
निर्मानो निरहंकृतिः शमसुधाभोगैकबद्धस्पृहः ॥९०॥

मातर्मेदिनि तात मारुत सखे ज्योतिः सुबन्धो जल
भ्रातर्व्योम निबद्ध एष भवतामग्रे प्रणामाञ्जलिः ।
युष्मत्सङ्गवशोपजातसुकृतोद्रेकस्फुरन्निर्मल
ज्ञानापास्तसमस्तमोहमहिमा लीये परब्रह्मणि ॥९१

स्वादिष्टं मधुनो घृताच्च रसवद्धात् प्रस्रवत्यक्षरं
दैवीवागमृतात्मनो रसवतस्तेनैव तृप्ता वयम् ।
कुक्षौ यावदिमे भवन्ति धृतये भिक्षाहृताः सक्तवः
तावद्दाप्यकृतार्जनैर्नहि धनैर्वृत्तिं समीहामहे ॥९२॥

निवृत्ता भोगेच्छा पुरुषबहुमानो विगलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ।
शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने
अहो धृष्टः कायस्तदपि मरणोपायचकितः ॥९३॥

हिंसाशून्यमयत्नलभ्यमशनं वायुः कृतो वेधसा
व्यालानां पशवस्तृणांकुरभुजः पुष्टाः स्थलीशायिनः ।

संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सहसा सर्वे समाप्तिं गुणाः ॥ ८

कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो
व्रणी पूयक्लिन्नः कृमिकुलशतैराष्टततनुः ।
क्षुधाक्षामो जीर्णः पिठरकपालार्पितगलः
शुनीमन्वेति श्वा हतमपि निहन्त्येव मदनः ॥ ९५ ॥

क्षत्पिण्डो जलरेखया वलयितः सर्वोप्ययं नन्वणुः
स्वांशीकृत्य तमेव संयुगशतैराज्ञां गणा भुञ्जते
दद्यन्ते ददतोथवा किमपरे क्षुद्रा दरिद्रा भृशम्
धिग्धिक्तापुरुषाधमान्धनलवं तेभ्योपि वाञ्छति ये ॥ ९६ ॥

ददतु ददतु गालीर्गालिमन्तो भवन्तो
वयमपि तदभावाद्गालिदानेऽसमर्थाः ।
जगति विदितमेतद्दीयते विद्यमानं
नहि शशकविषाणं कोपि कस्मै ददाति ॥ ९७ ॥

पुरा विद्वत्तासीदमलिनधियां क्लेशहतये
गता कालेनासौ विषयसुखसिद्धौ विषयिणाम् ।
इदानीं सम्प्रेक्ष्य क्षितिलवभुजः शास्त्रविमुखा
अहो कष्टं सापि प्रतिदिनमधोधः प्रविशति ॥ ९८ ॥

स जातः कोप्यासीन्मदनरिपुणा मूर्ध्नि धवलं
कपालं यस्योच्चैर्विनिहितमलङ्कारविधये ।
नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना
नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ ९९ ॥

यदा किञ्चिज्ज्ञोऽहं द्विपइव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किञ्चित्किञ्चिद्बुधजनसकाशादधिगतं
तदा मूर्खोऽस्मीति ज्वरइव मदो मे व्यपगतः ॥१००॥
माने म्लायिनि खण्डिते च वसुनि व्यर्थे प्रयातेऽर्थिनि
क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने ।
युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयः
पूतग्रावगिरीन्द्रकन्दरदरीकुञ्जे निवासः क्वचित् ॥१०१॥

इति श्रीभर्तृहरिविरचितं वैराग्यशतकं समाप्तम् ॥

इति काव्यसंग्रहे प्रथमखण्ड सम्पूर्णम् ।

### छन्दशास्त्र।

| | |
|---|---|
| छन्दमञ्जरी ... ... | ।) |
| पिङ्गल १म खण्ड ... | ...॥) |
| २य खण्ड ... | ...॥) |

### नाटक।

| | |
|---|---|
| वेणीसंहारः सटीक ... | ।॥) |
| शकुन्तला सटीक ... | ...।॥) |
| मुद्राराक्षस...१म खण्ड... | ...॥) |
| " ...२य "... | ...।) |
| मालविकाग्निमित्र ... | ...॥) |
| वसन्ततिलकभाणः ... | ... ।) |
| विक्रमोर्वशी ... ... | ...।॥) |

### कोष।

| | |
|---|---|
| हारावलि ... ... ... | =) |
| अमर ... ... ... | ॥) |
| मेदिनी ... | १) |

Sanskrit and English Dictionary by H. H Wilson.

| | |
|---|---|
| Part I. price ... ... | 8 Ans. |
| Part II " ... ... ... | 8 " |
| Part III. " ... ... ... | 8 " |

### प्रहसन।

| | |
|---|---|
| हास्यार्णवः ... ... | ... ।) |

### दर्शन।

| | |
|---|---|
| सर्व्वदर्शनसंग्रह ... | ... १) |

### ज्योतिः।

| | |
|---|---|
| सूर्यसिद्धान्तःसटीक......... | १।॥) |

### व्याकरण।

| | |
|---|---|
| मुग्धबोध ... ... ... | ॥) |

### न्याय।

| | |
|---|---|
| सिद्धान्तमुक्तावलि सहित भाषा-परिच्छेद ... ... | ।=) |
| शब्दशक्तिप्रकाशिका ... | ...१) |
| कुसुमाञ्जलि ... ... | ।) |

### साहित्य।

| | |
|---|---|
| दशकुमारचरित १म खण्ड... | ।) |
| " २य " | ॥) |
| वर्णपरिचय १म भागः ...... | –) |
| हितोपदेश ... ... ... | ॥) |

### हिन्दी।

| | |
|---|---|
| पाण्डवगीता मूल सहित ... | ।) |
| वैतालपच्चिसी ... ... | ।॥) |
| नजीरकी सैर ... ... | ।) |
| माधवविलास ... ... | ।) |
| इन्द्रजाल ... ... ... | ।॥) |
| रामकृष्ण वारमासी ... | ...–) |
| श्रीरामचरित्रमाहात्म्य ... | –) |
| श्रीरामचालिशा ... ... | –) |